# संस्कृतमञ्जरी





# SAMSKRTA MANJARI

NILKAMAL BHATTACHARYA.

श्रीनीलकमलभट्टाचार्य

# SAṀSKṚTAMAÑJARÎ

*OR*

*An Anthology of Sanskrit*

By

NILKAMAL BHATTACHARYA, M A.,
Professor of Sanskrit,
Central Hindu College, Benares.

---

# संस्कृतमञ्जरी

वाराणसीस्थ-
सेण्ट्रलहिन्दुकलेज़-संस्कृताध्यापक-
श्रीनीलकमलभट्टाचार्य-एम्. ए.-
सङ्कलिता ।

---



Second Edition
( *Thoroughly Revised* )

---

**Nand kishore & Bros.**
Benares.

---

1929

---

Price Fourteen Annas.

# PREFACE

The present is an attempt to satisfy the demand for a suitable text-book for students of the High School ( or Matriculation ) classes. The compiler believes that the learning of a language is best acquired, and most effectively, when the subject matter is co-ordinate with the mental growth of the learner. He also believes in the efficacy of placing high ideals before grown up boys. This defines the line he has followed in the present compilation. How far he has succeeded in the attempt he leaves it to his educational compeers to judge.

To facilitate self-study, a vocabulary has been appended with an addendum for words that could not find place in the vocabulary.

Any suggestions for improvement will be thankfully received.

विचिन्त्य कैशोरधियः समर्थता-
मुदात्तवस्तुस्पृहणीयतां तथा ।
इयं मया सङ्कलिताऽर्थसिद्धये
प्रकल्पतां संस्कृतमञ्जरी सताम् ॥

Benares,
*The 6th July, 1921.*

The Compiler.

# PREFACE TO THE SECOND EDITION.

In the present edition the book has been thoroughly revised. Some of the pieces that appeared a little too difficult or otherwise unsuitable have been removed or expurgated, and others of a more suitable character have been substituted or added. In scanty cases, a word or an expression has been modified in the light of the taste and capacities of the youug learners. A notable departure in the present edition is that the vocabulary has been dispensed with on the ground that it could not, as it appeared, be properly utilised by the student, and has been replaced by notes, mostly critical and suggestive, just enough for a healthy understanding of the text.

The book in its present form will, it is hoped, prove more useful and attractive than before to the young readers for whom it is intended.

Benares,
*The 1st February. 1929,* } The Author.

# अनुक्रमणिका

# संस्कृतमञ्जरी ।

सत्यं शिवं सुन्दरम् ।

## नीतिश्लोकाः ।

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ १ ॥
जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ २ ॥
आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ ३ ॥
मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चिताम् ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ४ ॥
उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ ५ ॥

किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ६ ॥
मुक्त्वा निःश्रीकमप्यब्जं मराली न गतान्यतः ।
भ्रमराली त्वगाद् वेगादिदं सदसदन्तरम् ॥ ७ ॥
बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ।
निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ ८ ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ९ ॥
तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
समुच्छ्रितानेव तरून् प्रबाधते
महान् महत्स्वेव करोति विक्रमम् ॥ १० ॥
पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ११ ॥
को धर्मो भूतदया । किं सौख्यमरोगिता जगति जन्तोः ।
कः स्नेहः सद्भावः । किं पाण्डित्यं परिच्छेदः ॥ १२ ॥

---

# हंसमयूरीयोपाख्यानम् ।

अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं[1] सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति । स च सर्वैर्जलचरपक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः । यतः,

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ १ ॥

एकदासौ राजहंसः सुविस्तीर्णकमलपर्यङ्के सुखासीनः परिवारपरिवृतस्तिष्ठति । ततः कुतश्चिद्देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच--'दीर्घमुख, देशान्तरादागतोऽसि । वार्तां कथय ।' स ब्रूते--'देव, अस्ति महती वार्ता । तामाख्यातुकाम एवाहं सत्वरमायातः । श्रूयताम् ।

अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्यानुचरैश्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च--'कस्त्वम् । कुतः समागतोऽसि ।' ततो मयोक्तम्--'अहं कर्पूरद्वीपस्य राजचक्रवर्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरः कौतुकाद्देशान्तरं द्रष्टुमागतः ।' एतच्छ्रुत्वा पक्षिभिरुक्तम्--'अनयोः को देशो भद्रतरो राजा च ।' मयोक्तम्--'आः किमेवमुच्यते । महदन्तरम् । यतः कर्पूरद्वीपः स्वर्ग एव राजहंसश्च द्वितीयः

स्वर्गपतिः। अत्र मरुस्थले पतिताः किं यूयं कुरुथ। आगच्छतास्मद्देशे गम्यताम्।' ततोऽस्मद्वचनमाकर्ण्य सर्वे सकोपा बभूवुः। तथा चोक्तम्,

पयःपानं भुजङ्गानां केवलं विषवर्धनम्।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये॥ २॥

राजोवाच--'ततस्तैः किं कृतम्।' बकः कथयति--'ततस्तैः पक्षिभिः कोपादुक्तम्--'केनासौ राजहंसः कृतो राजा।' ततो मयाप्युपजातकोपेनोक्तम्—'युष्मदीयो मयूरः केन राजा कृतः।' एतच्छ्रुत्वा ते सर्वे मां हन्तुमुद्यताः। ततो मयापि स्वविक्रमो दर्शितः।' राजा विहस्याह—'ततस्ततः।' दीर्घमुखो ब्रूते--'ततः पक्षिभिरुक्तम्--'अरे पाप दुष्ट बक, अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपसि तन्न क्षन्तव्यमिदानीम्।' इत्युक्त्वा सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः–'पश्य रे मूर्ख, स हंसस्तव राजा सर्वथा मृदुः। तस्य राज्येऽधिकार एव नास्ति। यत एकान्ततो मृदुः करतलगतमप्यर्थं रक्षितुमक्षमः। कथं स पृथिवीं शास्ति राज्यं वा तस्य किम्। त्वं च कूपमण्डूकः। तेन तदाश्रयणमुपदिशसि। शृणु,

सेवितव्यो महावृक्षः फलच्छायासमन्वितः।
यदि दैवात्फलं नास्ति च्छाया केन निवार्यते॥ ३॥

अन्यच्च,

महानप्यल्पतां याति निर्गुणे गुणविस्तरः ।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥' ४ ॥

ततो मयोक्तम्–'स एवास्मत्प्रभू राजहंसो महाप्रतापोऽतिसमर्थश्च । त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते किं पुना राज्यम्' इति । तदाहं तैः पक्षिभिः 'दुष्ट, कथमस्मद्भूमौ चरसि' इत्यभिधाय राज्ञश्चित्रवर्णस्य समीपं नीतः । ततो राज्ञः पुरो मां प्रदर्श्य तैः प्रणम्योक्तम्–'देव, अवधीयताम् एष दुष्टो बको यदस्मद्देशे चरन्नपि देवपादानधिक्षिपति ।' राजाह–'कोऽयम् । कुतः समायातः ।' त ऊचुः–हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः ।' अथाहं गृध्रेण मन्त्रिणा पृष्टः–'कस्तत्र मुख्यो मन्त्री' इति । मयोक्तम्–'सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः ।' अत्रान्तरे शुकेनोक्तम्–'देव, कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव । तत्रापि देवपादानामेवाधिपत्यम् ।' ततो राज्ञाप्युक्तम्–'एवमेव ।' ततो मयोक्तम्—'यदि वचनमात्रेणैवाधिपत्यं सिध्यति तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति ।' शुक उवाच—'कथमत्र निर्णयः ।' मयोक्तम्—'सङ्ग्राम एव ।' राज्ञा विहस्योक्तम्—'स्वस्वामिनं गत्वा सज्जीकुरु ।' ततो मयोक्तम्—'स्वदूतोऽपि प्रस्थाप्यताम् ।' राजोवाच—'कः प्रयातु दौत्येन ।' (विमृश्य) 'शुक एव व्रजतु । शुक, त्वमेवानेन सह गत्वास्मदभिलषितं

ब्रूहि ।' शुको ब्रूते–'यथाज्ञापयति देवः। किंत्वयं दुर्जनो बकः। तदनेन सह न गच्छामि ।'

ततो मयोक्तम्–'भ्रातः शुक, किमेवं ब्रवीषि । मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि ।' शुकेनोक्तम्—'अस्त्वेवम् । किन्तु,

दुर्जनैरुच्यमानानि सस्मितानि प्रियाण्यपि ।
अकालकुसुमानीव भयं सञ्जनयन्ति हि ॥ ५ ॥

दुर्जनत्वं च भवतो वाक्यादेव ज्ञातं यदनयोर्भूपालयोर्विग्रहे भवद्वचनमेव निदानम् ।'

ततोऽहं तेन राज्ञा यथाव्यवहारं सम्पूज्य प्रस्थापितः । शुकोऽपि मम पश्चादागच्छन्नास्ते । एतत्सर्वं परिज्ञाय यथाकर्तव्यमनुसन्धीयताम् । चक्रवाको विहस्याह–'देव, बकेन तावद्देशान्तरमपि गत्वा यथाशक्ति राजकार्यमनुष्ठितम् । किन्तु देव, स्वभाव एष मूर्खाणाम् । यतः,

शतं दद्यान्न विवदेदिति विज्ञस्य सम्मतम् ।
विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥' ६ ॥

राजाह—'किमनेनोपालम्भेन । प्रस्तुतमनुसन्धीयताम् ।' चक्रवाको ब्रूते–'देव, विजने ब्रवीमि । यतः,

वर्णाकारप्रतिध्वाननेत्रवक्त्रविकारतः ।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत् ॥' ७ ॥

राजा मन्त्री च तत्र स्थितौ। अन्येऽन्यत्र गताः। चक्रवाको ब्रूते—'देव, प्रणिधिस्तावत्तत्र प्रहीयताम्। ततस्तदनुष्ठानं बलाबलं च जानीमः। तथा हि,

भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने।
चारश्चक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः॥ ८॥

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु। तेनासौ स्वयं तत्रावस्थाय द्वितीयं तत्रत्यमन्त्रकार्यं सुनिभृतं निगद्य प्रस्थापयति। तथा चोक्तम्,

तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत्॥ ९॥

गूढचारश्च यो जले स्थले च चरति। ततोऽसावेव बको नियुज्यताम्। एतादृश एव कश्चिद् बको द्वितीयत्वेन प्रयातु। तद्गृहलोकश्च राजद्वारे तिष्ठतु। किन्तु देव, एतदपि सुगुप्तमनुष्ठातव्यम्। यतः,

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता॥'१०॥

राजा विमृश्योवाच—'प्राप्तस्तावन्मयोत्तमः प्रणिधिः।' मन्त्री ब्रूते—'तदा सङ्ग्रामविजयोऽपि प्राप्तः।'

अत्रान्तरे प्रतीहारः प्रविश्य प्रणम्योवाच—'देव, जम्बुद्वीपादागतो द्वारि शुकस्तिष्ठति।' राजा चक्रवाकमालोकयते। चक्रवाकेणोक्तम्—'कृतावासे तावद् गत्वा भवतु। पश्चादानीय

द्रष्टव्यः ।' प्रतीहारो गतः । राजाह–'विग्रहस्तावत्समुपस्थितः ।' चक्रवाको ब्रूते–'देव, तथापि सहसा विग्रहो न विधिः । विशेषतश्च महाबलोऽसौ चित्रवर्णो राजा । उक्तं च,

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ ११ ॥

किं च,

महत्यल्पेऽप्युपायज्ञः सममेव भवेत् क्षमः ।
समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः ॥ १२ ॥

अतस्तद्दूतोऽयं शुकोऽत्राश्वास्य तावद्ध्रियतां यावद् दुर्गं सज्जीक्रियते । यतः,

एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं शतसहस्राणि तस्माद् दुर्गं विधीयते ॥ १३ ॥

राजाह–'दुर्गानुसन्धाने को नियुज्यताम् ।' चक्रो ब्रूते–

'यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् ।
कर्मस्वदृष्टकर्मा यच्छास्त्रज्ञोऽपि विमुह्यति ॥ १४ ॥

तदाहूयतां सारसः ।' तथानुष्ठिते सत्यागतं सारसमालोक्य राजोवाच–'भोः सारस, त्वं सत्वरं दुर्गमनुसन्धेहि ।' सारसः प्रणम्योवाच–'देव, दुर्गं तावदिदमेव चिरात् सुनिरूपितमास्ते महत्सरः । किन्त्वत्र मध्यवर्तिद्वीपे द्रव्यसङ्ग्रहः कार्यताम् । यतः,

धान्यानां सङ्ग्रहो राजन्नुत्तमः सर्वसङ्ग्रहात्।
निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥' १८ ॥

राजाह—'सत्वरं गत्वा सर्वमनुतिष्ठ।' पुनः प्रविश्य प्रतीहारो ब्रूते--'देव, सिंहलद्वीपादागतो मेघवर्णो नाम वायसः सपरिवारो द्वारि तिष्ठति। देवपादं द्रष्टुमिच्छति।' राजाह—'काकः पुनः सर्वज्ञो बहुद्रष्टा च। तद् भवति सङ्ग्राह्यः।' चक्रो ब्रूते—'देव, अस्त्येवम्। किन्तु काकः स्थलचरः। तेनास्मद्विपक्षपक्षे नियुक्तः कथं सङ्ग्राह्यः।' राजाह—'यद्येवं तथापि दृश्यतां तावदयं दूरादागतः। तत्सङ्ग्रहे विचारः कार्यः।' चक्रो ब्रूते—'देव, प्रणिधिः प्रहितो दुर्गश्च सज्जीकृतम्। अतः शुकोऽप्यालोक्य प्रस्थाप्यताम्।' ततः सभां कृत्वाहूतः शुकः काकश्च। शुकः किञ्चिदुन्नतशिरा दत्तासन उपविश्य ब्रूते—'भो हिरण्यगर्भ, त्वां महाराजाधिराजः श्रीमच्चित्रवर्णः समाज्ञापयति। यदि जीवितेन श्रिया वा प्रयोजनमस्ति तदा सत्वरमागत्यास्मच्चरणौ प्रणम। नो चेदवस्थातुं स्थानान्तरं चिन्तय।' राजा सकोपमाह—'आः कोऽप्यस्माकं पुरतो नास्ति य एनं गलहस्तयति।' उत्थाय मेघवर्णो ब्रूते—'देव, आज्ञापय। हन्मि दुष्टं शुकम्।' सर्वज्ञो राजानं काकं च सान्त्वयन् ब्रूते—'शृणु तावत्,

दूतो नित्यमवध्यः स्याद्राजा दूतमुखो यतः।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥' १९ ॥

ततो राजा काकश्च स्वां प्रकृतिमापन्नौ । शुकोऽप्युत्थाय चलितः । पश्चाच्चक्रवाकेणानीय प्रबोध्य कनकालङ्कारादिकं दत्त्वा सम्प्रेषितो ययौ ।

शुको विन्ध्याचलं गत्वा राजानं प्रणतवान् । तमालोक्य चित्रवर्णो राजाह—'शुक, का वार्ता । कीदृशोऽसौ देशः ।' शुको ब्रूते—'देव, सङ्क्षेपादियं वार्ता । सम्प्रति युद्धोद्योगः क्रियताम् । देशश्चासौ कर्पूरद्वीपः स्वर्गैकदेशः कथं वर्णयितुं शक्यते ।' ततः सर्वान् शिष्टानाहूय राजा मन्त्रयितुमुपविष्टः । आह च—'सम्प्रति कर्तव्यविग्रहे यथाकर्तव्यमुपदेशं ब्रूत । विग्रहः पुनरवश्यं कर्तव्यः ।' दूरदर्शी नाम गृध्रो ब्रूते—'देव, व्यसनितया विग्रहो न विधिः । यतः,

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम् ।
यदैतन्निश्चितं भावि कर्तव्यो विग्रहस्तदा ॥ १७ ॥

किं च,

विशन्ति सहसा मूढा येऽविचार्य द्विषद्बलम् ।
खड्गधारापरिष्वङ्गं लभन्ते ते सुनिश्चितम् ॥' १८ ॥

राजाह—'मन्त्रिन्, ममोत्साहभङ्गं सर्वथा मा कृथाः ।' तत उत्थाय राजा मौहूर्तिकावेदितलग्ने प्रस्थितः ।

अथ प्रहितप्रणिधिर्हिरण्यगर्भमागत्योवाच—'देव, समागतप्रायो राजा चित्रवर्णः । सम्प्रति मलयपर्वताधित्यकायां समावासितकटको वर्तते । दुर्गशोधनं प्रतिक्षणमनुसन्धातव्यं

यतोऽसौ गृध्रो महामन्त्री । किं च । तस्य विश्वासकथाप्रसङ्गेन ज्ञातमेतन्मया यदनेन कोऽप्यस्मद्दुर्गे प्रागेव नियुक्तः ।' चक्रो ब्रूते—'देव, काक एवासौ सम्भवति ।' राजाह—'न कदाचिदेतत् । यद्येवं तदा कथं तेन शुकस्याभिभवायोद्योगः कृतः ।' मन्त्री ब्रूते—'तथाप्यागन्तुः शङ्कनीयः ।'

राजाह—'यातु । प्रस्तुतमनुसन्धीयताम् । मलयाधित्यकायां चेच्चित्रवर्णस्तदधुना किं विधेयम् ।' मन्त्री वदति—'देव, आगतप्रणिधिमुखान्मया श्रुतं यन्महामन्त्रिणो गृध्रस्योपदेशे चित्रवर्णेनानादरः कृतः । अतोऽसौ मूढो जेतुं शक्यः । तथा चोक्तम्,

लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखोच्छेद्यो रिपुः स्मृतः ॥ १९ ॥

ततोऽसौ यावदस्मद्दुर्गद्वाररोधं न करोति तावन्नद्यद्रिवनवर्त्मसु तद्बलानि हन्तुं सारसादयः सेनापतयो नियुज्यन्ताम् ।'

तथानुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह—'तात, किमित्यस्मदुपेक्षा क्रियते । किं क्वाप्यविनयो ममास्ति ।' गृध्रोऽवदत्—'देव, शृणु,

न साहसैकान्तरसानुवर्तिना
न चाप्युपायोपहतान्तरात्मना ।

विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्ये च वसन्ति सम्पदः ॥ २० ॥

त्वया च स्वबलोत्साहमवलोक्य साहसैकरसिना मयोपन्यस्तेष्वपि मन्त्रेष्वनवधानं वाक्पारुष्यं च कृतम् । ततो मयाप्यालोचितम्—'प्रज्ञाहीनोऽयं राजा । नो चेत्कथं नीतिशास्त्रकथाकौमुदीं वागुल्काभिस्तिरयति । यतः,

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥' २१ ॥

इत्यालोच्याहं तूष्णीं स्थितः ।' अथ राजा बद्धाञ्जलिराह—'तात, अस्त्वयं ममापराधः । इदानीं यथावशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश ।' गृध्रः स्वगतं चिन्तयति—'क्रियतामत्र प्रतीकारः ।' प्रकाशं ब्रूते—'देव, मा भैषीः । समाश्वसिहि । भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेण कालेन विन्ध्याचलं नेष्यामि ।' राजाह—'कथमधुना स्वल्पबलेन तत्सम्पद्यते ।' गृध्रो वदति—'देव, सर्वं भविष्यति । यतो विजिगीषोरदीर्घसूत्रता विजयसिद्धेरवश्यम्भावः । तत्सहसैव दुर्गावरोधः क्रियताम् ।'

अथ प्रणिधिना बकेनागत्य हिरण्यगर्भस्य कथितम्—'देव, स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपष्टम्भाद् दुर्गावरोधं करिष्यति ।' राजहंसो ब्रूते—'सर्वज्ञ, किमधुना विधेयम् ।' चक्रो ब्रूते-'स्वबले सारासारविचारः क्रियताम् ।

तज्ज्ञात्वा सुवर्णवस्त्रादिकं यथार्हं प्रसादप्रदानं क्रियताम्। यतः,

क्रतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसङ्ग्रहे।
प्रियासु नारीष्वधनेषु बान्धवे-
ष्वतिव्ययो नास्ति नराधिपाष्टसु॥' २२॥

राजाह—'कथमिह समयेऽतिव्ययो युज्यते। उक्तं च,
आपदर्थे धनं रक्षेत्'

मन्त्री ब्रूते—'श्रीमतामापदः कुतः।

राजाह—'सा चेदपगता लक्ष्मीः'

मन्त्री ब्रूते—'सञ्चितार्थो विनश्यति॥ २३॥

तद् देव, कार्पण्यं विमुच्य स्वभटाः दानमानाभ्यां पुरस्क्रियन्ताम्।'

अथागत्य प्रणम्य मेघवर्णो ब्रूते—'देव, दृष्टिप्रसादं कुरु। एष युद्धार्थी विपक्षो दुर्गद्वारि वर्तते। तद् देवपादादेशाद् बहिर्निःसृत्य स्वविक्रमं दर्शयामि। तेन देवप्रसादानामानृण्यमुपगच्छामि।' चक्रो ब्रूते—'मैवम्। यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रयणमेव निष्प्रयोजनम्। देव, स्वयं गत्वा दृश्यतां युद्धम्। यतः,

पुरस्कृत्य बलं राजा योधयेदवलोकयन्।
स्वामिनाधिष्ठितः श्वापि किं न सिंहायते ध्रुवम्॥'२४॥

अनन्तरं ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः। अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच—'तात, स्वप्रतिज्ञातमधुना निर्वाहय।' गृध्रो ब्रूते—'अत्र यथाशक्ति क्रियते यत्नः। (कर्णे कथयति) एवमेवम्।' ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु प्रवृत्ते युद्धे दुर्गाभ्यन्तरगृहेष्वेकदा काकैरग्निर्निक्षिप्तः। ततः 'गृहीतं गृहीतं दुर्गम्' इति कोलाहलं श्रुत्वा सर्वतः प्रदीप्ताग्निमवलोक्य राजहंससैनिका दुर्गवासिनश्च सत्वरं ह्रदं प्रविष्टाः। राजहंसः स्वभावान्मन्दगतिः सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः। हिरण्यगर्भः सारसमाह—'सारस सेनापते, ममानुरोधान्नात्मानं व्यापादयिष्यसि। गन्तुं त्वमधुनापि समर्थः। तद् गत्वा जलं प्रविश्यात्मानं परिरक्ष। अस्मत्पुत्रं चूडारत्ननामानं सर्वज्ञसम्मत्या राजानं करिष्यसि।' सारसो ब्रूते—'देव, न वक्तव्यमेवं दुःसहं वचः। यावच्चन्द्रार्कौ दिवि तिष्ठतस्तावद्विजयतां देवः। अहं देव, दुर्गाधिकारी। मन्मांसासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रुः। अपरं च देव,

क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते।'

राजाह—'अस्त्येवम्। किन्तु,

शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः॥' २५॥

सारसो ब्रूते—'शृणु देव,

यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ २६ ॥

अन्यच्च,

भवेऽस्मिन्पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ २७ ॥

देव, त्वं च स्वामी सर्वथा रक्षणीयः। यतः,

नरेशे जीवलोकोऽयं निमीलति निमीलति।
उदेत्युदीयमाने च रवाविव सरोरुहम् ॥' २८ ॥

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः। तदा सत्वरमुपसृत्य सारसेन स्वदेहेनान्तरितो राजा जले क्षिप्तः। अनन्तरं कुक्कुटै नखप्रहारजर्जरीकृतेन सारसेन कुक्कुटसेना बहुशो हताः। पश्चात्सारसोऽपि बहुभिः सम्भूय व्यापादितः। अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गाभ्यन्तरस्थितं द्रव्यं ग्राहयित्वा वन्दिभिर्जयशब्दैरभिनन्दितः स्वस्कन्धावारं जगाम।

ततस्तेन राजहंसेनोक्तम्—'केनास्मद्दुर्गे निक्षिप्तोऽग्निः। किं पारक्येण किं वास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन।' चक्रो ब्रूते—'देव, भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते। तन्मन्ये तस्यैव विचेष्टितमिदम्।' अथ

प्रणिधिर्बकस्तत्रागत्योवाच—'देव, प्रागेव मया निगदितम् दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति । तच्च युष्माभिर्न कृतम् । अतस्तदनवधानस्य फलमनुभूतम् । दुर्गदाहश्चायं मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः ।' राजा निःश्वस्याह—

'प्रणयादुपकाराद् वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते ॥' २९ ॥

प्रणिधिरुवाच—'इतो दुर्गदाहं विधाय यदा गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्–'अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम् । तथा चोक्तम्,

कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् ।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ ३० ॥

चक्रवाको ब्रूते–'ततस्ततः ।' प्रणिधिरुवाच–'ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम्–'देव, नेदमुचितम् । प्रसादान्तरं किमपि क्रियताम् । यतो महतामास्पदे नीचः कदापि न कर्तव्यः । अपरं च । सुकरमिदमिति न मन्तव्यम् ।' ततः स चित्रवर्णो राजा रहसि गृध्रमुवाच–'तात, यथाकर्तव्यमुपदिश ।' गृध्रो ब्रूते–'यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यताम् । अन्यथा वर्षाकाले प्राप्ते तुल्यबलेन सह पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति । सुखशोभार्थं च सन्धाय गम्यताम् । दुर्गं भग्नं कीर्तिश्च लब्धैव । मम सम्मतं तावदेतत् । यतः,

सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च ।
युधि सन्देहदोलास्थं को हि कुर्यादबालिशः ॥' ३१ ॥

राजाह—'प्रागेव किं नोक्तं भवद्भिः ।' मन्त्री ब्रूते—'मद्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः । तदापि मम सम्मत्या नायं विग्रहारम्भः । सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः ।' चक्रवाकोऽवदत्—'प्रणिधे, सर्वमवगतम् । व्रज । पुनर्ज्ञात्वागमिष्यसि ।' ततो राजानं सम्बोध्याह—'देव, यद्यपि महामन्त्रिणा गृध्रेण सन्धानमुपन्यस्तं तथापि तेन राज्ञा सम्प्रति भूतजयदर्पान्न मन्तव्यम् । तदेवं क्रियताम् । सिंहलद्वीपस्य महाबलो नाम सारसो राजास्मन्मित्रं जम्बुद्वीपे कोपं जनयतु ।'

राज्ञा 'एवमस्तु' इति निगद्य विचित्रनामा बकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रस्थापितः । अथ प्रणिधिरागत्योवाच—'देव, श्रूयतां तत्रत्यप्रस्तावः । एवं तत्र गृध्रेणोक्तम्—'देव, यन्मेघवर्णस्तत्र चिरमुषितः स वेत्ति किं सन्धेयगुणयुक्तो हिरण्यगर्भो राजा न वेति ।' ततोऽसौ मेघवर्णश्चित्रवर्णेन राज्ञा समाहूय पृष्टः—'वायस, कीदृशोऽसौ हिरण्यगर्भः । चक्रवाको मन्त्री वा कीदृशः ।' वायस उवाच—'देव, हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः । चक्रवाकसमश्च मन्त्री न क्वाप्यवलोक्यते ।' राजाह—'यद्येवं तदा कथमसौ त्वया वञ्चितः ।' विहस्य मेघवर्णः प्राह—'देव,

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ ३२ ॥

शृणु देव, तेन मन्त्रिणाहं प्रथमदर्शन एव ज्ञातः । किन्तु महाशयोऽसौ राजा । तेन मया विप्रलब्धः ।' राजाह—'मेघवर्ण, कथं त्वया शत्रुमध्ये चिरमुषितम्। कथं वा तेषामनुनयः कृतः।' मेघवर्ण उवाच—'देव, स्वामिकार्यार्थे स्वप्रयोजनवशाद्वा किं न क्रियते । पश्य,

लोको वहति किं राजन् न मूर्ध्ना दग्धुमिन्धनम् ।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति ॥ ३३ ॥

देव, सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा । सन्धीयतामिति मे मतिः ।' राजोवाच—'कोऽयं भवतो विचारः । यतो जितस्तावदयमस्माभिस्ततो यद्यस्मत्सेवया वसति तदास्ताम् । नो चेद्विगृह्यताम् ।'

अत्रान्तरे जम्बुद्वीपादागत्य शुकेनोक्तम्—'देव, सिंहलद्वीपस्य सारसो राजा सम्प्रति जम्बुद्वीपमाक्रम्यावतिष्ठते ।' राजा ससम्भ्रमं ब्रूते—'किं किम् ।' शुकः पूर्वोक्तं कथयति । गृध्रः स्वगतमुवाच—'साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ, साधु साधु ।' राजा सकोपमाह—'आस्तां तावदयम् । गत्वा तमेव समुन्मूलयामि ।' दूरदर्शी प्राह—

'सहसा विदधीत न क्रियाम्
अविवेकः परमापदां पदम् ।

१
वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ॥ ३४ ॥

तद्देव, यदीदानीमस्मद्वचनं क्रियते तदा सन्धाय गम्यताम्। यतः,

यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता ॥' ३५ ॥

राजाह—'कथमेवं सम्भवति।' मन्त्री ब्रूते—'देव, सत्वरं भविष्यति। यतः,

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ३६ ॥

विशेषज्ञश्चायं सर्वज्ञो मन्त्री राजा च। ज्ञातमेतन्मया मेघवर्णवचनात्तत्कृतकार्यसन्दर्शनाच्च।' राजाह—'यथाभिप्रेतमनुष्ठीयताम्।'

ततः प्रणिधिबकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्—'देव, सन्धिं कर्तुं महामन्त्री गृध्रोऽस्मत्समीपमागच्छति।' राजहंसो ब्रूते—'मन्त्रिन्, पुनस्तत्सम्बन्धिना केनाचिदत्रागन्तव्यम्।' 'सर्वज्ञो विहस्याह—'देव, न शङ्कास्पदमेतत्। यतोऽसौ महाशयो दूरदर्शी। अथवा शङ्कापि ते युज्यते एव। तथा हि,

सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशास्वविचक्षणः।

न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ ३७ ॥

अपि च,

दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ ३८ ॥

तद् देव, यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जीक्रियताम् ।'

तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेणोपगम्य सत्कृत्यानीय राजदर्शनं कारितो दत्तासन उपवेशितः । चक्रवाक उवाच—'युष्मदायत्तं सर्वम् । स्वेच्छयोपभुज्यतामिदं राज्यम् ।' राजहंसो ब्रूते–'एवमेव ।' दूरदर्शी कथयति–'एवमेवैतत् । यतः,

सद्भावेन हरेन्मित्रं सम्भ्रमेण तु बान्धवान् ।
स्त्रीभृत्यौ दानमानाभ्यां दाक्षिण्येनेतराञ्जनान् ॥ ३९ ॥

तदिदानीं सन्धाय प्रस्थाप्यतां महाप्रतापश्चित्रवर्णो राजा ।' सर्वज्ञो ब्रूते–'एवमस्तु ।' ततो राजहंसेन राज्ञा वस्त्रालङ्कारोपहारैः स मन्त्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य सन्निधानं गतः । तत्र चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद् बहुमानदानपुरःसरं सम्भावितः सन्धिं स्वीकृत्य

राजहंसकटकं प्रस्थापितः । दूरदर्शी ब्रूते-'देव, सिद्धं नः समीहितम् । इदानीं स्वस्थानं विन्ध्याचलं प्रतिगम्यताम् ।'

अथ सर्वे स्वस्थानं प्राप्य मनोऽभिलषितं फलं प्राप्नुवन् ।



## कविप्रतिभा ।

कदाचिदासीनयोः कालिदासभोजराजयोरासीत् सन्ध्या । राजा 'सखे, सन्ध्यां वर्णय' इत्यवादीत् । कालिदासः--

'व्यसनिन इव क्रिया क्षीयते पङ्कजश्री-
गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः ।
कुनृपतिरिव लोकं पीडयत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥' १ ॥

पुनश्च राजानं स्तौति कविः--

'महाराज श्रीमञ्जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं करिवरमभौमं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना' ॥२॥

कदाचित् प्रविशति द्वारपालः-'देव, कोऽपि विद्वान् द्वारि तिष्ठति' इति । राजा-'प्रवेशय ।' ततः प्रवेशितः कविरागत्य

'स्वस्ति' इत्युक्त्वा राजानं स्तौति--

'कङ्कणं नयनद्वन्द्वे तिलकं करपल्लवे ।
अहो भूषणवैचित्र्यं भोजप्रत्यर्थियोषिताम् ॥' ३ ॥

कदाचिद् राजा बहिरुद्यानमध्येमार्गं प्रत्यागच्छन्तं कमपि विप्रं ददर्श । तस्य करे चर्ममयं कमण्डलुं वीक्ष्य तुरङ्गं तदग्रे निधायाह--'विप्र, चर्मपात्रं किमर्थं पाणौ वहसि' इति । स च विप्रो नूनं मुखशोभया मृदूक्त्या च भोज इति विचार्याह--'वदान्यशिरोमणौ भोजे पृथ्वीं शासति लोहताम्राभावः समजनि । तेन चर्ममयं पात्रं वहामि' इति । राजा—'भोजे शासति लोहताम्राभावे को हेतुः ।' तदा विप्रः पठति—

'अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम् ।
शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥' ४ ॥

एकदा कश्चित् सुवर्णकारः प्रान्तेषु पद्मरागमणिमण्डितं सुवर्णभाजनमादाय राज्ञः पुरो मुमोच । ततो राजा सीमन्तकविं प्राह —'सुकवे, इदं भाजनं कामपि श्रियं दर्शयति ।' ततः कविराह—

'धारेश त्वत्प्रतापेन पराभूतस्त्विषाम्पतिः ।
सुवर्णपात्रव्याजेन देव त्वामेव सेवते ॥' ५ ॥

कदाचित् कुम्भकारवधू राजगृहमेत्य द्वारपालं प्राह—'द्वारपाल, राजा द्रष्टव्यः ।' स आह—'किं ते राज्ञा कार्यम् ।' सा चाह—'न तेऽभिधास्यामि । नृपाग्र एव कथयामि ।' स सभा-

यामागत्य प्राह—'देव कुम्भकारप्रिया काचिद् राज्ञो दर्शनाकांक्षिणी । न वक्ति मत्पुरः कार्यम् । त्वत्पुरतः कथयिष्यति ।' राजा—'प्रवेशय ।' सा चागत्य नमस्कृत्य वक्ति—

'देव मृत्खननाद् दृष्टं निधानं वल्लभेन मे ।
स पश्यन्नेव तत्रास्ते त्वां ज्ञापयितुमभ्यगाम् ॥' ६ ॥

राजा च चमत्कृतो निधानकलशमानाययामास । ततश्च तद्द्वारमुद्घाट्य यावत् पश्यति राजा तावत् तदन्तर्वर्तिद्रव्यमणिप्रभामण्डलम् आलोक्य कुम्भकारं पृच्छति—किमेतत् कुम्भकार ।' स चाह—

'राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् ।
रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन् ॥' ७ ॥

कदाचिद्राजा मृगयारसपराधीनो हयमारुह्य प्रतस्थे ।
ततो नदीं समुत्तीर्णं शिरस्यारोपितेन्धनम् ।
वेषेण ब्राह्मणं ज्ञात्वा राजा पप्रच्छ सत्वरम् ॥ ८ ॥

'कियन्मानं जलं विप्र'
स आह— 'जानुदघ्नं नराधिप ।'
राजाह—'ईदृशी किमवस्था ते'
स आह— 'न हि सर्वे भवादृशाः ॥' ९ ॥

अन्यदा कुण्डिननगराद् गोपालो नाम कविरागत्य स्वस्ति-

पूर्वकं प्राह—

'त्वच्चित्ते भोज निर्यातं द्रव्यं तृणकणायते।
क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः॥' १० ॥

अन्यदा सिंहासनम् अलङ्कुर्वाणे श्रीभोजनृपतौ द्वारपाल आगत्याह—'देव, जाह्नवीतीरवासिनी काचन विदुषी द्वारि तिष्ठति।' राजा–'प्रवेशय।' तत आगच्छन्तीं राजा प्रणमति। सा तं 'चिरं जीव' इत्युक्त्वाह—

'भोजप्रतापाग्निरपूर्व एष
जागर्ति भूभृत्कटकस्थलीषु।
यस्मिन् प्रविष्टे रिपुपार्थिवानां
तृणानि रोहन्ति गृहाङ्गणेषु॥' ११ ॥

कदाचिद् रात्रौ सौधोपरि क्रीडापरो राजा शशाङ्कमालोक्य प्राह—

'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।'

ततश्चाधोभूमौ सौधान्तःप्रविष्टः कश्चिच्चौर आह—

'अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकणकलङ्काङ्किततनुम्॥' १२ ॥

राजा तच्छ्रुत्वा प्राह–'अहो महाभाग, कस्त्वमर्धरात्रे कोशगृहमध्ये तिष्ठसि' इति। स आह–'देव, अभयं नो देहि'

इति। राजा—'तथा' इति। ततो राजानं स चौरः प्रणम्य स्ववृत्तान्तमकथयत्।

अन्यदा श्रीभोजः श्रीमहेश्वरं नन्तुं शिवालयमभ्यगात्। तदा कोऽपि ब्राह्मणो राजानं शिवसन्निधौ प्राह—

'अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं
देवेत्थं जगतीतले पुरहराभावे समुन्मीलति।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां तु भिक्षाटनम्॥' १३॥

कदाचिद् द्वारपाल आगत्य प्राह—'देव, कोऽपि विद्वान् द्वारि तिष्ठति' इति। राजा—'प्रवेशय' इति। ततः प्रविष्टो विद्वान् पठति—

'क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी।
ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र दरिद्रता॥' १४॥

अन्यदा कोङ्कणदेशवासी विप्रो राज्ञे 'स्वस्ति' इत्युक्त्वा प्राह—

'शुक्तिद्वयपुटे भोज यशोऽब्धौ तव रोदसी।
मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम्॥' १५॥

अन्यदा राजा रात्रौ चन्द्रमण्डलं दृष्ट्वा तदन्तःस्थकलङ्कं वर्णयति स्म—

'अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे।'

इति राजा पूर्वार्धं लिखित्वा कालिदासहस्ते ददौ । ततः स तस्मिन्नेव क्षण उत्तरार्धं लिखति कविः--

'इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥'१६॥

अन्यदा राजा सीतां प्रातः प्राह-'देवि, प्रभातं व्यावर्णय' इति । सीता प्राह--

'विरलविरलाः स्थूलास्ताराः कलाविव सज्जना
मन इव मुनेः सर्वत्रैव प्रसन्नमभून्नभः ।
अपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनो
व्रजति च निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥'१७॥

---

## शिष्यपरीक्षा ।

तांस्तु सर्वान् समानीय सर्वविद्यास्त्रशिक्षितान् ।
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभ ॥ १ ॥
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ २ ॥
शीघ्रं भवन्तः सर्वेऽपि धनूंष्यादाय सर्वशः ।
भासमेतं समुद्दिश्य तिष्ठध्वं सन्धितेषवः ॥ ३ ॥

मद्वाक्यसमकालं तु शिरोऽस्य विनिपात्यताम्।
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ॥ ४ ॥
ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः।
सन्धत्स्व बाणं दुर्धर्ष मद्वाक्यान्ते विमुञ्च तम् ॥ ५ ॥
ततो युधिष्ठिरः पूर्वं धनुर्गृह्य परन्तपः।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रणोदितः ॥ ६ ॥
ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम्।
स मुहूर्तादुवाचेदं वचनं भरतर्षभ ॥ ७ ॥
पश्यसि त्वं द्रुमाग्रस्थं भासं नरवरात्मज।
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ॥ ८ ॥
स मुहूर्तादिव पुनर्द्रोणस्तं प्रत्यभाषत।
अथ वृक्षमिमं मां वा भ्रातॄन् वापि प्रपश्यसि ॥ ९ ॥
तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम्।
भवन्तं च तथा भ्रातॄन् भासं चेति पुनः पुनः ॥ १० ॥
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव।
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ॥ ११ ॥
ततो दुर्योधनादींस्तान् धार्तराष्ट्रान् महायशाः।
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ॥ १२ ॥
अन्यांश्च शिष्यान् भीमादीन् राज्ञश्चैवान्यदेशजान्।
तथा च सर्वे तत्सर्वं पश्याम इति कुत्सिताः ॥ १३ ॥

ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत ।
त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं विलोक्यताम् ॥ १४ ॥
मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः ।
वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ॥ १५ ॥
एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रणोदितः ॥ १६ ॥
मुहूर्तादिव तं द्रोणस्तथैव समभाषत ।
पश्यस्येनं स्थितं भासं द्रुमं मामपि चार्जुन ॥ १७ ॥
पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत ।
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ॥ १८ ॥
ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षः पाण्डवानां महारथम् ॥ १९ ॥
भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः ।
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ॥ २० ॥
अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः ।
मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन् ॥ २१ ॥
ततस्तस्य नगस्थस्य क्षुरेण निशितेन च ।
शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥ २२ ॥

---

# पाण्डवसभा ।

सभा च सा महाराज शातकुम्भमयद्रुमा ।
दश किष्कुसहस्राणि समन्तादायताभवत् ।। १ ।।
अभिन्नतीव प्रभया प्रभामर्कस्य भास्वराम् ।
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा ।। २ ।।
नवमेघप्रतीकाशा दिवमावृत्य विष्ठिता ।
आयता विपुला रम्या विपाप्मा विगतक्लमा ।। ३ ।।
उत्तमद्रव्यसम्पन्ना रत्नप्राकारतोरणा ।
बहुचित्रा बहुधना सुकृता विश्वकर्मणा ।। ४ ।।
न दाशार्ही सुधर्मा वा ब्रह्मणो वाथ तादृशी ।
सभा रूपेण सम्पन्ना यां चक्रे मतिमान्मयः ।। ५ ।।
तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च ।
सभामष्टौ सहस्राणि किङ्करा नाम राक्षसाः ।। ६ ।।
अन्तरीक्षचरा घोरा महाकाया महाबलाः ।
तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ।। ७ ।।
वैदूर्यपत्रविततां मणिनालोज्ज्वलाम्बुजाम् ।
पद्मसौगन्धिकवतीं नानाद्विजगणायुताम् ।। ८ ।।
पुष्पितैः पङ्कजैश्चित्रां कूर्मैर्मत्स्यैश्च काञ्चनैः ।
चित्रस्फाटिकसोपानां निष्पङ्कसलिलां शुभाम् ।। ९ ।।

मन्दानिलसमुद्धूतां मुक्ताबिन्दुभिराचिताम् ।
महामणिशिलापट्टबद्धपर्यन्तवेदिकाम् ॥ १० ॥
मणिरत्नचितां तान्तु केचिदभ्येत्य पार्थिवाः ।
दृष्ट्वापि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥ ११ ॥
तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः ।
आसन्नानाविधा लीलाः शीतच्छाया मनोरमाः ॥ १२ ॥
काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः ॥ १३ ॥
जलजानां च पद्मानां स्थलजानां च सर्वशः ।
मारुतो गन्धमादाय पाण्डवान् स्म निषेवते ॥ १४ ॥
ईदृशीं तां समां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राजन्न्यवेदयत् ॥ १५ ॥
बसन् दुर्योधनस्तस्यां सभायां पुरुषर्षभ ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ १६ ॥
तस्यां दिव्यानभिप्रायान् ददर्श कुरुनन्दनः ।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ १७ ॥
स कदाचित् सभामध्ये धार्तराष्ट्रो महीपतिः ।
स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ॥ १८ ॥
स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः ।
ततः स्थले निपतितो दुर्मना व्रीडितो नृपः ॥ १९ ॥

ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ।
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ॥ २० ॥
जले निपतितं दृष्ट्वा भीमसेनो महाबलः ।
जहास जहसुश्चैव किङ्कराश्च सुयोधनम् ॥ २१ ॥
नामर्षयत् ततस्तेषामवहासममर्षणः ।
आकारं रक्षमाणस्तु न स तान् समुदैक्षत ॥ २२ ॥
पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम् ।
आरुरोह ततः सर्वे जहसुश्च पुनर्जनाः ॥ २३ ॥
द्वारं तु पिहिताकारं स्फाटिकं प्रेक्ष्य भूमिपः ।
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः ॥ २४ ॥
तादृशं च परं द्वारं स्फाटिकोरुकपाटकम् ।
विघट्टयन् कराभ्यान्तु निष्क्रम्याग्रे पपात ह ॥ २५ ॥
द्वारं तु विततकारं समापेदे पुनश्च सः ।
तद्वृत्तं चेति मन्वानो द्वारस्थानादुपारमत् ॥ २६ ॥
एवं प्रलम्भान् विविधान् प्राप्य तत्र विशाम्पते ।
पाण्डवेयाभ्यनुज्ञातस्ततो दुर्योधनो नृपः ॥ २७ ॥
अप्रहृष्टेन मनसा राजसूये महाक्रतौ ।
प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् ॥ २८ ॥

१५ अक्टूबर १९३०.

---

# शौनकोपदेशः ।

श्रूयतां तेऽभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरा गीताः श्लोका महात्मना ॥ १ ॥
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्यासस‌मासाभ्यां शमोपायमिमं शृणु ॥ २ ॥
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
दुःखं चतुर्भिः शारीरं कारणैः सम्प्रवर्तते ॥ ३ ॥
तदा तत्प्रतिकाराच्च सततं चाविचिन्तनात् ।
आधिव्याधिप्रशमनं क्रियायोगद्वयेन तु ॥ ४ ॥
मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्वते ।
मानसस्य प्रियाख्यानैः सम्भोगोपनयैर्नृणाम् ॥ ५ ॥
मानसेन हि दुःखेन शरीमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ ६ ॥
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना ।
प्रशान्ते मानसे ह्यस्य शरीरमुपशाम्यति ॥ ७ ॥
मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तु र्दुःखयोगमुपैति च ॥ ८ ॥
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ ९ ॥

कोटराग्निर्यथाशेषं समूलं पादपं दहेत्।
धर्मार्थी तु तथाल्पोऽपि रागदोषो विनाशयेत् ॥ १० ॥
विप्रयोगे न तु त्यागी दोषदर्शी समागमे।
विरागं भजते जन्तुर्निर्वैरो निरवग्रहः ॥ ११ ॥
तस्मात्स्नेहं न लिप्सेत मित्रेभ्यो धनसञ्चयात्।
स्वशरीरसमुत्थं च ज्ञानेन विनिवर्तयेत् ॥ १२ ॥
रागाभिभूतः पुरुषः कामेन परिकृष्यते।
इच्छा सञ्जायते तस्य ततस्तृष्णा विवर्धते ॥ १३ ॥
तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी स्मृता।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ १४ ॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ १५ ॥
राजतः सलिलादग्नेश्चौरतः स्वजनादपि।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १६ ॥
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वत्र वित्तवान् ॥ १७ ॥
अर्थ एव हि केषाञ्चिदनर्थं भजते नृणाम्।
अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ॥ १८ ॥
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ १९ ॥

अर्था दुःखं परित्यक्तुं पालिताश्चैव शत्रवः।
दुःखेन चाधिगम्यन्ते तस्मान्नाशं न चिन्तयेत् ॥ २० ॥
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखम्।
तस्मात्सन्तोषमेवेह परं पश्यन्ति पण्डिताः ॥ २१ ॥
अनित्यं यौवनं रूपं जीवितं रत्नसञ्चयः।
ऐश्वर्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ २२ ॥
न हि सञ्चयवान् कश्चिद् दृश्यते निरुपद्रवः।
अतश्च धार्मिकैः पुंभिरनीहार्थः प्रशस्यते ॥ २३ ॥
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य श्रेयो नस्पर्शनं नृणाम् ॥ २४ ॥
युधिष्ठिरैवं सर्वेषु न स्पृहां कर्तुमर्हसि।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ॥ २५ ॥

---

## सौभाभियानम्।

इतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृप।
उपायाद् भरतश्रेष्ठ शाल्वो द्वारवतीं पुरीम् ॥ १ ॥
अरुधत् तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन।
सौभस्थोऽथ महीपालो योधयामास तां पुरीम् ॥ २ ॥

पुरी समन्ताद् विहिता सपताका सतोरणा ।
सोपशल्यप्रतोलीका साट्टाट्टालकगोपुरा ॥ ३ ॥
सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका ।
सतोमराङ्कुशा राजन् सशतघ्नीकलाङ्गला ॥ ४ ॥
पुरुषैः कुरुशार्दूल समर्थैः प्रतिवारणे ।
मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता ॥ ५ ॥
आघोषितं च नगरे न पातव्या सुरेति वै ।
प्रमत्तेष्वभिघातं हि कुर्याच्छाल्वो नराधिपः ॥ ६ ॥
संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः ।
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः ॥ ७ ॥
न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ।
वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे ॥ ८ ॥
एवं सुविहिता राजन् द्वारका भूरिदक्षिणा ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥ ९ ॥
तां तूपयातो राजेन्द्र शाल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह ॥ १० ॥
ततो निर्याय प्रद्युम्नो व्यवस्थाप्य च तद्बलम् ।
दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ ११ ॥
उच्छ्रित्य मकरं केतुं व्यात्ताननमिवान्तकम् ।
उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात् परान् ॥ १२ ॥

अभियानं तु वीरेण प्रद्युम्नेन महारणे ।
नामर्षयत संक्रुद्धः शाल्वः कुरुकुलोद्वह ॥ १३ ॥
स रोषमदमत्तो वै कामगादवरुह्य च ।
प्रद्युम्नं योधयामास शाल्वः परपुरञ्जयः ॥ १४ ॥
स शाल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ १५ ॥
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत् तूर्णं शिक्षितो दारुकिस्तदा ॥ १६ ॥
नातिदूरापयाते तु रथे रथवरप्रणुत् ।
धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदम् ॥ १७ ॥
सौते किं ते व्यवसितं कस्माद् यासि पराङ्मुखः ।
नैष वृष्णिप्रवीराणामाहवे धर्म उच्यते ॥ १८ ॥
त्वञ्च सूतकुले जातो विनीतः सूतकर्मणि ।
धर्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके ॥ १९ ॥
स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे ।
अपयानं पुनः सौते मैवं कार्षीः कथञ्चन ॥ २० ॥
त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः ।
त्वयापनीतो विवशो न जीवेयं कथञ्चन ॥ २१ ॥
स निवर्त रथेनाशु पुनर्दारुकनन्दन ।
न चैतदेवं कर्तव्यमप्यापत्सु कथञ्चन ॥ २२ ॥

एवमुक्तस्तु वै सूतो हयान् सन्नोद्य सङ्गरे।
रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत् तदा ॥ २३ ॥
प्रयुज्यमानमाज्ञाय दैतेयास्त्रं सुतो मम।
शितास्त्रैरन्तरा च्छित्वा मुमोचान्यान् पतत्रिणः ॥ २४ ॥
ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः।
शिरस्युरसि वक्त्रे च स मुमोह पपात च ॥ २५ ॥
तत उत्थाय राजेन्द्र शाल्वः परमदुर्मनाः।
व्यपायात् सबलस्तूर्णं प्रद्युम्नशरपीडितः ॥ २६ ॥
स द्वारकां परित्यज्य क्रूरो वृष्णिभिरर्दितः।
सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ॥ २७ ॥

---

# द्वैतवनवासः।

वसत्सु वै द्वैतवने पाण्डवेषु महात्मसु।
अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत ॥ १ ॥
ईर्यमाणेन सततं ब्रह्मघोषेण सर्वशः।
ब्रह्मलोकसमं पुण्यमासीद् द्वैतवनं सरः ॥ २ ॥
यजुषामृचां साम्नां च गद्यानां चैव सर्वशः।
आसीदुच्चार्यमाणानां निःस्वनो हृदयङ्गमः ॥ ३ ॥

ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ४ ॥
अथाब्रवीद् बको दाल्भ्यो धर्मराजं युधिष्ठिरम् ।
सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ ५ ॥
पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम ।
होमवेलां कुरुश्रेष्ठ सम्प्रज्वलितपावकाम् ॥ ६ ॥
चरन्ति धर्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः ।
भृगवोऽङ्गिरसश्चैव वसिष्ठाः काश्यपैः सह ॥ ७ ॥
आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः ।
सर्वस्य जगतः श्रेष्ठा ब्राह्मणाः सङ्गतास्त्वया ॥ ८ ॥
इदं तु वचनं पार्थ शृणुष्व गदतो मम ।
भ्रातृभिः सह कौन्तेय यत्त्वां वक्ष्यामि कौरव ॥ ९ ॥
ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णे दहतः शत्रून् वनानीवाग्निमारुतौ ॥ १० ॥
कुञ्जरस्येव सङ्ग्रामे परिगृह्याङ्कुशग्रहम् ।
ब्राह्मणैर्विप्रहीणस्य क्षत्रस्य क्षीयते बलम् ॥ ११ ॥
ब्रह्मण्यानुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
ते यदा चरतः सार्धं तदा लोकः प्रसीदति ॥ १२ ॥
ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य परिवृद्धये ॥ १३ ॥

ब्राह्मणेषूत्तमा वृत्तिस्तव नित्यं युधिष्ठिर।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ १४ ॥

---

# कर्मप्रशंसा।

कर्म खल्विह कर्तव्यं जानतामित्रकर्शन।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ १ ॥
सर्वे हि स्वं समुत्थानमुपजीवन्ति जन्तवः।
अपि धाता विधाता च यथायमुदके बकः ॥ २ ॥
यश्च दिष्टपरो लोके यश्चापि हठवादिकः।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥ ३ ॥
अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ ४ ॥
यच्चापि किञ्चित्पुरुषो दिष्टं नाम भजत्युत।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ ५ ॥
यत्स्वयं कर्मणा किञ्चित्फलमाप्नोति पूरुषः।
प्रत्यक्षमेतल्लोकेषु तत्पौरुषमिति श्रुतम् ॥ ६ ॥
स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात्।
तत् स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ ७ ॥

एवं हठाच्च दैवाच्च स्वभावात् कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत् फलं पूर्वकर्मणाम् ॥ ८ ॥
मनसार्थान् विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं वीर पुरुषस्तत्र कारणम् ॥ ९ ॥
कर्तव्यमेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहोऽयं पराभवति पूरुषः ॥ १० ॥
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ ११ ॥
पृथिवीं लाङ्गलेनेह भित्त्वा बीजं वपत्युत ।
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ॥ १२ ॥
सिद्धिर्वाप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ।
अनारम्भे हि न फलं न गुणो दृश्यते क्वचित् ॥ १३ ॥
देशकालावुपायांश्च मङ्गलं स्वास्तिवृद्धये ।
युनक्ति मेधया धीरो यथाशक्ति यथाबलम् ॥ १४ ॥

---

## गन्धमादनप्रवेशः ।

ते शूरास्ततधन्वानस्तूणवन्तः समार्गणाः ।
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ १ ॥

परिगृह्य द्विजश्रेष्ठाञ्श्रेष्ठाः सर्वधनुष्मताम् ।
पाञ्चालीसहिता राजन् प्रययुर्गन्धमादनम् ॥ २ ॥
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्धनि ॥ ३ ॥
नित्यपुष्पफलान् देशान् देवर्षिगणसेवितान् ।
चेरुरुच्चावचाकारान् देशान् विषमसङ्कटान् ॥ ४ ॥
पश्यन्तो मृगजातानि बहूनि विविधानि च ।
विविशुस्ते महात्मानः किन्नराचरितं गिरिम् ॥ ५ ॥
प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।
चण्डवातं महद्वर्षं प्रादुरासीद् विशाम्पते ॥ ६ ॥
ततो रेणुः समुद्धूतः सपत्रबहुलो महान् ।
पृथिवीं चान्तरीक्षं च द्यां चैव सहसावृणोत् ॥ ७ ॥
न स्म प्रज्ञायते किञ्चिदावृते व्योम्नि रेणुना ।
न चापि शेकुस्ते कर्तुमन्योन्यस्याभिभाषणम् ॥ ८ ॥
न चापश्यंस्ततोऽन्योन्यं तमसावृतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ ९ ॥
द्रुमाणां वातभग्नानां पततां भूतलेऽनिशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ १० ॥
द्यौः स्वित् पतति किं भूमिर्दीर्यन्ते पर्वता नु किम् ।
इति ते मेनिरे सर्वे पवनेनातिमोहिताः ॥ ११ ॥

ते पथानन्तरान् वृक्षान् वल्मीकान् विषमाणि च ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे ॥ १२ ॥
ततः कार्मुकमादाय भीमसेनो महाबलः ।
कृष्णामादाय सङ्गम्य तस्थावाश्रित्य पादपम् ॥ १३ ॥
धर्मराजश्च धौम्यश्च निलिल्याते महावने ।
अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते ॥ १४ ॥
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ।
वृक्षानासाद्य सन्त्रस्तास्तत्र तत्र निलिल्यिरे ॥ १५ ॥
मन्दीभूते तु पवने तस्मिन् रजसि शाम्यति ।
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ॥ १६ ॥
भृशं चटचटाशब्दो वज्राणां पततामिव ।
ततस्ताश्चञ्चलाभासश्चेरुरभ्रेषु विद्युतः ॥ १७ ॥
ततोऽश्मसहिता धाराः संवृण्वन्त्यः समन्ततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ १८ ॥
तत्र सागरगा ह्यापः कीर्यमाणाः समन्ततः ।
प्रादुरासन् सकलुषाः फेनवत्यो विशाम्पते ॥ १९ ॥
वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षन्तो महीरुहान् ॥ २० ॥
तस्मिन्नुपरते शब्दे वाते च समतां गते ।
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ २१ ॥

निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थिरे पुनर्वीरा पर्वतं गन्धमादनम् ॥ २२ ॥
क्रोशमात्रं प्रयातेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ २३ ॥
श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली सम्मुमोह तपस्विनी ॥ २४ ॥
पठ्यमानेऽथ मन्त्रे तु शान्त्यर्थं परमर्षिभिः ।
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ २५ ॥
सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ २६ ॥

---

# सावित्री ।

अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १ ॥
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २ ॥
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३ ॥

नारदः—क्व गताभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भर्त्रे न चैनां सम्प्रयच्छसि ॥ ४ ॥

राजा—कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
एतस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ५ ॥
सा ब्रूहि विस्तरेणेति पित्रा संनोदिता शुभा ।
तदैव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥ ६ ॥
आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाच्चान्धो बभूव ह ॥ ७ ॥
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्ववैरिणा ॥ ८ ॥
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९ ॥
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १० ॥

नारदः—अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥ ११ ॥

राजा—अपीदानीं स तेजस्वी बुद्धिमान् वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान् पितृवत्सलः ॥ १२ ॥

नारदः—विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥ १३ ॥

राजा—अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाप्यथवा प्रियदर्शनः ॥ १४ ॥

नारदः-साङ्कृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।
ब्रह्मण्यः सत्यवादी च शिविरौशीनरो यथा ॥ १५ ॥
ययातिरिव चोदारः सोमवत् प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १६ ॥

स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ।
स मैत्रः सोऽनसूयश्च स ह्रीमान् द्युतिमांश्च सः ॥१७॥
नित्यशश्चार्जवं तस्मिन् स्थितिस्तस्यैव च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ १८ ॥

राजा—गुणैरुपेतं सर्वैस्तं भगवन् प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ १९ ॥

नारदः—एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन न शक्यमतिवर्तितुम् ॥ २० ॥
एको दोषोऽस्ति नान्योऽस्य सोऽद्य प्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ २१ ॥

राजा—एहि सावित्रि गच्छ त्वमन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ २२ ॥
यथा मे भगवानाह नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ २३ ॥

सावित्री—सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ २४ ॥
दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ २५ ॥
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते।
क्रियते कर्मणा पश्चात् प्रमाणं मे मनस्ततः ॥ २६ ॥
नारदः—स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥ २७ ॥
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ २८ ॥
राजा—अविचाल्यमेतदुक्तं तथ्यं च भवता वचः।
करिष्याम्येतदेवं च गुरुर्हि भगवान् मम ॥ २९ ॥
नारदः—अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव।
साधयिष्याम्यहं तावत् सर्वेषां भद्रमस्तु वः ॥ ३० ॥

---

## प्रश्नचतुष्टयम्।

यक्षः—का च वार्ता किमाश्चर्यं कः पन्थाः कश्च मोदते।
ब्रूहि मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ १ ॥

युधिष्ठिरः—अस्मिन्महामोहमये कटाहे
सूर्याग्निना रात्रिदिवेन्धनेन।
मासर्तुदर्वीपरिघट्टनेन
भूतानि कालः पचतीति वार्ता ॥ २ ॥
अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्।
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम् ॥ ३ ॥
वेदा विभिन्ना स्मृतयो विभिन्ना
नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ ४ ॥
पञ्चमेऽहनि षष्ठे वा शाकं पचति वै गृहे।
अनृणी चाप्रवासी च स वारिचर मोदते ॥ ५ ॥

---

## भीष्मसन्तर्पणम्।

व्युष्टायां तु महाराज शर्वर्यां सर्वपार्थिवाः।
पाण्डवा धार्तराष्ट्राश्च उपातिष्ठन् पितामहम् ॥ १ ॥
तं वीरशयने वीरं शयानं कुरुसत्तमम्।
अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभम् ॥ २ ॥

कन्याश्चन्दनचूर्णैश्च लाजैर्माल्यैश्च सर्वशः।
अवाकिरञ्छान्तनवं तत्र गत्वा सहस्रशः ॥ ३ ॥
उपारम्य च युद्धेभ्यः सन्नाहान् विप्रमुच्य ते।
आयुधानि च निक्षिप्य सहिताः कुरुपाण्डवाः ॥ ४ ॥
अन्वासत दुराधर्षं देवव्रतमरिन्दमम् ।
अन्योन्यं प्रीतिमन्तस्ते यथापूर्वं यथावयः ॥ ५ ॥
सा पार्थिवशताकीर्णा समितिर्भीष्मशोभिता ।
शुशुभे भारती दीप्ता दिवीवादित्यमण्डलम् ॥ ६ ॥
भीष्मस्तु वेदनां धैर्यान्निगृह्य भरतर्षभ ।
अर्जुनं द्रष्टुमिच्छामि इत्यभाषत भारत ॥ ७ ॥
अथोपेत्य महाबाहुरभिवाद्य पितामहम् ।
अतिष्ठत् प्राञ्जलिः प्रह्वः किं करोमीति चाब्रवीत् ॥ ८ ॥
तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतः स्थितम् ।
अभ्यभाषत धर्मात्मा भीष्मः प्रीतो धनञ्जयम् ॥ ९ ॥
ज्वलतीव शरीरं मे संवृतस्य तवेषुभिः ।
मर्माणि परिदूयन्ते मुखं च परिशुष्यति ॥ १० ॥
वेदनार्तशरीरस्य प्रयच्छापो धनञ्जय ।
त्वं हि शक्तो महेष्वास दातुं मेऽपो यथाविधि ॥ ११ ॥
अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्यवान् ।
अधिज्यं बलवत् कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ १२ ॥

ततः प्रदक्षिणं कृत्वा रथेन रथिनां वरः ।
शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ १३ ॥
सन्धाय च शरं दीप्तमभिमन्त्र्य स पाण्डवः ।
अविध्यत् पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे ॥ १४ ॥
उत्पपात ततो धारा वारिणो विमला शुभा ।
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च ॥ १५ ॥
अतर्पयत्ततः पार्थः शीतया जलधारया ।
भीष्मं कुरूणामृषभं दिव्यकर्मपराक्रमम् ॥ १६ ॥

---

## सुभद्राश्वासनम् ।

अथार्जुनगृहं गत्वा वासुदेवः सुदुर्मनाः ।
भगिनीं पुत्रशोकार्तामाश्वासयत दुःखिताम् ॥ १ ॥
मा शोकं कुरु वार्ष्णेयि कुमारं प्रति सस्नुषा ।
सर्वेषां प्राणिनां भीरु निष्ठैषा कालनिर्मिता ॥ २ ॥
कुले जातस्य वीरस्य क्षत्रियस्य विशेषतः ।
सदृशं मरणं ह्येतत्तव पुत्रस्य मा शुचः ॥ ३ ॥
दिष्ट्या महारथो वीरः पितुस्तुल्यपराक्रमः ।
क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् ॥ ४ ॥

जित्वा सुबहुशः शत्रून् प्रेषयित्वा च मृत्यवे।
गतः पुण्यकृतां लोकान् सर्वकामदुहोऽक्षयान् ॥ ५ ॥
तपसा ब्रह्मचर्येण श्रुतेन प्रज्ञयाऽपि च।
सन्तो यां गतिमिच्छन्ति प्राप्तस्तां तव पुत्रकः ॥ ६ ॥
वीरसूर्वीरपत्नी त्वं वीरजा वीरबान्धवा।
मा शुचस्तनयं भद्रे गतः स परमां गतिम् ॥ ७ ॥
प्राप्स्यते चाप्यसौ क्षुद्रः सैन्धवो बालघातकः।
अस्यावलेपस्य फलं ससुहृद्गणबान्धवः ॥ ८ ॥
व्युष्टायां तु वरारोहे रजन्यां पापकर्मकृत्।
न हि मोक्ष्यति पार्थात्स प्रविष्टोऽप्यमरावतीम् ॥ ९ ॥
श्वः शिरः श्रोष्यसे तस्य सैन्धवस्य रणे हृतम्।
समन्तपञ्चकाद् बाह्यं विशोका भव मा रुदः ॥ १० ॥
क्षत्रधर्मं पुरस्कृत्य गतः शूरः परां गतिम्।
यां वयं प्राप्नुयामेह ये चान्ये शस्त्रजीविनः ॥ ११ ॥
व्यूढोरस्को महाबाहुरनिवर्ती रथप्रणुत्।
गतस्तव वरारोहे पुत्रः स्वर्गं ज्वरं जहि ॥ १२ ॥
अनुयातश्च पितरं मातृपक्षं च वीर्यवान्।
सहस्रशो रिपून् हत्वा हतः शूरो महारथः ॥ १३ ॥
आश्वासय स्नुषां राज्ञि मा शुचः क्षत्रिये भृशम्।
श्वः प्रियं सुमहच्छ्रुत्वा विशोका भव नन्दिनि ॥ १४ ॥

यत् पार्थेन प्रतिज्ञातं तत्तथा न तदन्यथा ।
चिकीर्षितं हि ते भर्तुर्न भवेज्जातु तन्मृषा ॥ १९ ॥

---

## गृध्रजम्बुकसंवादः ।

कस्यचिद् ब्राह्मणस्यासीद् दुःखलब्धः सुतो मृतः ।
बाल एव विशालाक्षो बालग्रहनिपीडितः ॥ १ ॥
बान्धवास्तं गृहीत्वाथ श्मशानाभिमुखाः स्थिताः ।
अङ्केनैव च सङ्क्रम्य रुरुदुर्भृशदुःखिताः ॥ २ ॥
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत्—
अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले रौद्रे सर्वप्राणिभयङ्करे ॥ ३ ॥
न पुनर्जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ४ ॥
कर्मान्तविरते लोके अस्तं गच्छति भास्करे ।
गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ ५ ॥
ततो गृध्रवचः श्रुत्वा प्राक्रोशन्तस्तदा नृप ।
बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले ॥ ६ ॥
ध्वाङ्क्षपक्षसवर्णस्तु बिलान्निःसृत्य जम्बुकः ।
गच्छमानान् स्म तानाह निर्घृणाः खलु मानुषाः ॥ ७ ॥

अहि

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत मा भयम् ।
बहुरूपो मुहूर्तश्च जीवत्यपि कदाचन ॥ ८ ॥
इमं कुलकरं पुत्रं त्यक्त्वा क्व नु गमिष्यथ ।
चिरं मुञ्चत बाष्पं च चिरं स्नेहेन पश्यत ॥ ९ ॥
क्षीणस्यार्थाभियुक्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठन्ति तत्रान्यो नाधितिष्ठति ॥ १० ॥
जम्बुकस्य वचः श्रुत्वा कृपणं परिदेवतः ।
न्यवर्तन्त तदा सर्वे शवार्थे ते स्म मानुषाः ॥ ११ ॥

गृध्रः—अहो बत नृशंसेन जम्बुकेनाल्पमेधसा ।
क्षुद्रेणोक्ता हीनसत्त्वा मानुषाः किं निवर्तथ ॥ १२ ॥
पञ्चभूतपरित्यक्तं शून्यं काष्ठत्वमागतम् ।
कस्माच्छोचथ तिष्ठन्तमात्मानं किं न शोचथ ॥ १३ ॥
यथाकृता च भूतेषु प्राप्यते सुखदुःखिता ।
गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ॥ १४ ॥
न कर्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा ।
मार्गेणान्येन गच्छन्ति बद्धाः सुकृतदुष्कृतैः ॥ १५ ॥
शोकं त्यजत दैन्यं च सुतस्नेहान्निवर्तत ।
त्यज्यतामयमाकाशे ततः शीघ्रं निवर्तत ॥ १६ ॥
इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियम् ।
स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ॥ १७ ॥

प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा ।
सर्वः कालवशं याति शुभाशुभसमान्वितः ॥ १८ ॥
यौवनस्थांश्च बालांश्च वृद्धान् गर्भगतानपि ।
सर्वानाविशते मृत्युरेवम्भूतमिदं जगत् ॥ १९ ॥

जम्बुकः–अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पबुद्धिना ।
पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥ २० ॥
अद्य शोकं विजानामि मानुषाणां महीतले ।
स्नेहं हि कारणं कृत्वा ममाप्यश्रूण्यथापतन् ॥ २१ ॥
अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतः सुखम् ।
प्रयत्नात् प्राप्यते ह्यर्थः कस्माद् गच्छथ निर्दयाः ॥२२॥
अथवास्तङ्गते सूर्ये सन्ध्याकाल उपस्थिते ।
ततो नेष्यथ वा पुत्रमिहस्था वा भविष्यथ ॥ २३ ॥

गृध्रः—अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः ।
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ॥ २४ ॥
त्यक्तजीवस्य चैवास्य कस्माद्धित्वा न गच्छथ ।
निरर्थको ह्ययं स्नेहो निष्फलश्च परिश्रमः ॥ २५ ॥
चक्षुर्भ्यां न च कर्णाभ्यां संशृणोति समीक्षते ।
कस्मादेनं समुत्सृज्य न गृहान् गच्छथाशु वै ॥ २६ ॥
मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम् ।
शोको द्विगुणतां याति दृष्ट्वा स्मृत्वा च चेष्टितम् ॥२७॥

इत्येतद्वचनं श्रुत्वा सन्निवृत्तास्तु मानुषाः ।
अपश्यत्तं तदा सुप्तं द्रुतमागत्य जम्बुकः ॥ २८ ॥

जम्बुकः–इमं कनकवर्णाभं भूषणैः समलङ्कृतम् ।
गृध्रवाक्यात् कथं पुत्रं त्यजध्वे पितृपिण्डदम् ॥ २९ ॥

न स्नेहस्य च विच्छेदो विलापरुदितस्य च ।
मृतस्यास्य परित्यागात्तापो वै भविता ध्रुवम् ॥ ३० ॥

श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः ।
जीवितो धर्ममासाद्य रामात् सत्यपराक्रमात् ॥ ३१ ॥

तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः ।
श्वेतेन धर्मनिष्ठेन मृतः सञ्जीवितः पुनः ॥ ३२ ॥

तथा कश्चिल्लभेत् सिद्धो मुनिर्वा देवतापि वा ।
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥ ३३ ॥

इत्युक्तास्ते न्यवर्तन्त शोकार्ताः पुत्रवत्सलाः ।
अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम् ॥ ३४ ॥

गृध्रः—अश्रुपातपरिक्लिन्नः पाणिस्पर्शप्रपीडितः ।
धर्मराजप्रयोगाच्च दीर्घनिद्रां प्रवेशितः ॥ ३५ ॥

तपसापि हि संयुक्ता धनवन्तो महाधियः ।
सर्वे मृत्युवशं यान्ति तदिदं प्रेतपत्तनम् ॥ २६ ॥

बालवृद्धसहस्राणि सदा सन्त्यज्य बान्धवाः ।
दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले ॥ ३७ ॥

अलं निर्बन्धमागत्य शोकस्य परिधारणे।
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ॥ ३८ ॥

यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथञ्चन।
तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ ॥ ३९ ॥
इत्युक्तास्ते सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः।
दह्यमानाः सुतस्नेहात् प्रययुर्बान्धवा गृहम् ॥ ४० ॥

जम्बुकः—अहो धिग् गृध्रवाक्येन यथैवाबुद्धयस्तथा।
कथं गच्छथ निःस्नेहाः सुतस्नेहं विसृज्य च ॥ ४१ ॥
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
सुखदुःखावृते लोके नेहास्त्येकमनन्तरम् ॥ ४२ ॥

इमं क्षितितले त्यक्त्वा बालं रूपसमन्वितम्।
कुलशोभाकरं मूढाः पुत्रं त्यक्त्वा क्व यास्यथ ॥ ४३ ॥
रूपयौवनसम्पन्नं द्योतमानमिव श्रिया।
जीवन्तमेव पश्यामि मनसा नात्र संशयः ॥ ४४ ॥

गृध्रः—अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः।
दारुणः काननोद्देशः कौशिकैरभिनादितः ॥ ४५ ॥

भानुर्यावत्प्रयात्यस्तं यावच्च विमला दिशः।
तावदेनं परित्यज्य प्रेतकार्याण्युपासत ॥ ४६ ॥

नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणम्।
मृगेन्द्राः प्रतिनर्दन्ति रविरस्तं च गच्छति ॥ ४७ ॥

चिताधूमेन नीलेन संरज्यन्ते च पादपाः ।
श्मशाने च निराहाराः प्रतिनर्दन्ति देवताः ॥ ४८ ॥
क्रूरश्चायं वनोद्देशो भयमद्य भविष्यति ।
त्यज्यतां काष्ठभूतोऽयं मृश्यतां जाम्बुकं वचः ॥ ४९ ॥
जम्बुकः—अयं सौम्यो वनोद्देशः पितॄणां निधनाकरः ।
स्थीयतां यावदादित्यः किञ्च क्रव्यादभाषितैः ॥ ५० ॥
यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च ।
गृह्णीथ मोहितात्मानः सुतो वो न भविष्यति ॥ ५१ ॥
स्वकार्यबद्धकक्षा तावेवं गृध्रोऽथ जम्बुकः ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ ५२ ॥
तयोर्विज्ञानविदुषो र्द्वयोर्मृगपतत्रिणोः ।
वाक्यैरमृतकल्पैस्ते प्रतिष्ठन्ति व्रजन्ति च ॥ ५३ ॥
पश्य दैवस्य संयोगं बान्धवानां च निश्चयम् ।
प्रसादं शङ्करात्प्राप्य दुःखिताः सुखमाप्नुवन् ॥ ५४ ॥
ते विस्मिताः प्रहृष्टाश्च पुत्रसञ्जीवनात्पुनः ।
विविशुः पुत्रमादाय नगरं हृष्टमानसाः ॥ ५५ ॥

---

# यौवराज्यप्रस्तावः ।

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १ ॥
विदितं भवतामेतद् यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ २ ॥
सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः प्रतिपालितम् ।
श्रेयसा योक्तुमिच्छामि सुखार्हमखिलं जगत् ॥ ३ ॥
मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ।
प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ४ ॥
इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य च्छायायां जरितं मया ॥ ५ ॥
राजप्रभावजुष्टां च दुर्वहामजितेन्द्रियैः ।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ६ ॥
सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
सन्निकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान् ॥ ७ ॥
अनुजातो हि मां सर्वैर्गुणैः श्रेष्ठो ममात्मजः ।
पुरन्दरसमो वीर्ये रामः परपुरञ्जयः ॥ ८ ॥
तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् ।
यौवराज्ये नियोक्तास्मि प्रातः पुरुषपुङ्गवम् ॥ ९ ॥

अनुरूपः स वो नाथो लक्ष्मीवाँल्लक्ष्मणाग्रजः।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १० ॥
अनेन श्रेयसा सद्यः संयोक्ष्येऽहमिमां महीम्।
गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ ११ ॥
यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम्।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १२ ॥
यद्यप्येषा मम प्रीति र्हितमन्यद् विचिन्त्यताम्।
अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया ॥ १३ ॥
इदं ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम्।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १४ ॥
स्निग्धोऽनुनादः सञ्जज्ञे ततो हर्षसमीरितः।
जनौघोद्घुष्टसन्नादो मेदिनीं कम्पयन्निव ॥ १५ ॥

---

# रामविवासनम्।

तदाप्रियममित्रघ्नो वचनं मरणोपमम्।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥
हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च।
नियुज्यमानो विश्रब्धः किं न कुर्यामहं प्रियम् ॥ २ ॥

अलीकं मानसं त्वेकं हृदयं दहतीव मे ।
स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥ ३ ॥
अहं हि सीतां राज्यं च प्राणानिष्टान् धनानि च ।
हृष्टो भ्रात्रे स्वयं दद्यां भरताय प्रणोदितः ॥ ४ ॥
तदाश्वासय ह्रीमन्तं किं न्विदं यन्महीपतिः ।
वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ ५ ॥
दण्डकारण्यमेषोऽहं गच्छाम्येव हि सत्वरः ।
अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ६ ॥
न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ ७ ॥
न नूनं मयि कैकेयि कंचिदाशंससे गुणम् ।
यद् राजानमवोचस्त्वं ममेश्वरतरा सती ॥ ८ ॥
यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकायां महद् वनम् ॥ ९ ॥
भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्यं स हि धर्मः सनातनः ॥ १० ॥
स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् ।
निष्क्रम्यान्तःपुरात्तस्मात् स्वं ददर्श सुहृज्जनम् ॥११॥
आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ।
शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥ १२ ॥

न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति ।
लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षयः ॥ १३ ॥
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ १४ ॥
सर्वोऽप्यभिजनः श्रीमाञ्श्रीमतः सत्यवादिनः ।
नालक्षयत रामस्य किञ्चिदाकारमानने ॥ १५ ॥
उचितं च महाबाहुर्न जहौ हर्षमात्मवान् ।
शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥ १६ ॥

---

## दशरथसन्तापः ।

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः ।
अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥
स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मनः ।
कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ २ ॥
यदाचरति कल्याणि शुभं वा यदि वाशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ३ ॥
देव्यनूढा त्वमभवो युवराजो भवाम्यहम् ।
ततः प्रावृडनुप्राप्ता मम हर्षविवर्धिनी ॥ ४ ॥

अपास्य हि रसान् भौमांस्तप्त्वा च जगदंशुभिः।
परेताचरितां भीमां रविराचरते दिशम् ॥ ५ ॥
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः।
ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ ६ ॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः।
वृष्टिवातावधूताग्रान् पादपानभिपेदिरे ॥ ७ ॥
पतितेनाम्भसाच्छन्नः पतमानेन चासकृत्।
आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ ८ ॥
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि।
सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजङ्गवत् ॥ ९ ॥
तस्मिन्नतिसुखे काले धनुष्मानिषुमान् रथी।
व्यायामकृतसङ्कल्पः सरयूमन्वगां नदीम् ॥ १० ॥
निपाने महिषं रात्रौ गजं वाभ्यागतं मृगम्।
अन्यद्वा श्वापदं किञ्चिज्जिघांसुरजितेन्द्रियः ॥ ११ ॥
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ १२ ॥
ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम्।
शब्दं प्रति गजप्रेप्सुरभिलक्ष्यमपातयम् ॥ १३ ॥
तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः।
हा हेति पततस्तोये बाणव्यथितमर्मणः ॥ १४ ॥

तस्मिन्निपतिते भूमौ वागभूत्तत्र मानुषी ।
कथमस्मद्विधे शस्त्रं निपतेच्च तपस्विनि ॥ १५ ॥
प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः ।
इषुणाभिहतः केन कस्य वापकृतं मया ॥ १६ ॥
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ १७ ॥
जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्यात् किं वास्यापकृतं मया ॥ १८ ॥
नेमं तथानुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरञ्चोभावनुशोचामि मद्वधे ॥ १९ ॥
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ २० ॥
तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
कराभ्यां सशरं चापं व्यथितस्यापतद् भुवि ॥ २१ ॥
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ।
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥ २२ ॥
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।
पांशुशोणितदिग्धाङ्गं शयानं शल्यवेधितम् ॥ २३ ॥
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनम् ।
समुवाच वचः क्रूरं दिधक्षन्निव तेजसा ॥ २४ ॥

किं तवापकृतं राजन्वने निवसता मया ।
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ २५ ॥
एकेन खलु बाणेन मर्मण्यभिहते मयि ।
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ २६ ॥
इयमेकपदी राजन् यतो मे पितुराश्रमः ।
तं प्रसादय गत्वा त्वं न त्वां सङ्कुपितः शपेत् ॥ २७ ॥
विशल्यं कुरु मां राजन् मर्म मे निशितः शरः ।
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ २८ ॥
तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ।
स मामुद्वीक्ष्य सन्त्रस्तो जहौ प्राणांस्तपोधनः ॥ २९ ॥
तस्यायं कर्मणो देवि विपाकः समुपस्थितः ।
अपथ्यैः सह सम्भुक्ते व्याधिरन्नरसे यथा ॥ ३० ॥

---

## सन्ध्यावर्णनम् ।

रविरस्तं गतः श्रीमानुपोह्य रजनीं शुभाम् ॥ १ ॥
दिवसं परिकीर्णानामाहारार्थं पतत्रिणाम् ।
सन्ध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः ॥ २ ॥
एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः ।
सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ३ ॥

ऋषीणामग्निहोत्रेषु हुतेषु विधिपूर्वकम् ।
कपोताङ्गारुणो धूमो दृश्यते पवनोद्धुतः ॥ ४ ॥
अल्पपर्णा हि तरवो घनीभूताः समन्ततः ।
विप्रकृष्टेन्द्रिये देशे न प्रकाशन्ति वै दिशः ॥ ५ ॥
रजनीचरसत्त्वानि प्रचरन्ति समन्ततः ।
तपोवनमृगा ह्येते वेदितीर्थेषु शेरते ॥ ६ ॥
सम्प्रवृत्ता निशा सीते नक्षत्रसमलंकृता ।
ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यते ह्युदितोऽम्बरे ॥ ७ ॥

---

## ताराविलापः ।

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ।
पतिं लोकश्रुतं तारा मृतं वचनमब्रवीत् ॥ १ ॥
शेषे त्वं विषमे दुःखमकृत्वा वचनं मम ।
उपलोपचिते वीर सुदुःखे वसुधातले ॥ २ ॥
मत्तः प्रियतरा नूनं वानरेन्द्र मही तव ।
शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३ ॥
इदं तद् वीरशयनं तत्र शेषे हतो युधि ।
शायिता निहता यत्र त्वयैव रिपवः पुरा ॥ ४ ॥

विशुद्धसत्त्वाभिजन प्रिययुद्ध मम प्रिय ।
मामनाथां विहायैकां गतस्त्वमसि मानद ॥ ५ ॥
शूराय न प्रदातव्या कन्या खलु विपश्चिता ।
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥ ६ ॥
अवभग्नश्च मे मानो भग्नाथ शाश्वती गतिः ।
अगाधे च निमग्नास्मि विपुले शोकसागरे ॥ ७ ॥
अश्मसारमयं नूनमिदं मे हृदयं दृढम् ।
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा कृतम् ॥ ८ ॥
सुहृच्चैव च भर्ता च प्रकृत्या च मम प्रियः ।
प्रहारे च पराक्रान्तः शूरः पञ्चत्वमागतः ॥ ९ ॥
पतिहीना तु या नारी कामं भवतु पुत्रिणी ।
धनधान्यसमृद्धापि विधवेत्युच्यते बुधैः ॥ १० ॥
स्वगात्रप्रभवे वीर शेषे रुधिरमण्डले ।
कृमिरागपरिस्तोमे स्वकीये शयने यथा ॥ ११ ॥
रेणुशोणितसंवीतं गात्रं तव समन्ततः ।
परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ ॥ १२ ॥
कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ।
यस्य रामविमुक्तेन हृतमेकेषुणा भयम् ॥ १३ ॥
अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणाम् ।
सम्प्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा ॥ १४ ॥

अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ।
दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे ॥ १५ ॥
अहं पुत्रसहाया त्वामुपासे गतचेतनम् ।
सिंहेन पातितं सद्यो गौः सवत्सेव गोवृषम् ॥ १६ ॥
इष्ट्वा संग्रामयज्ञेन रामप्रहरणाम्भसा ।
तस्मिन्नवभृथे स्नातं कथं पत्न्या मया विना ॥ १७ ॥
या दत्ता देवराजेन तव तुष्टेन संयुगे ।
शातकौम्भीं प्रियां मालां तां ते पश्यामि नेह किम् ॥१८॥
राजश्रीर्न जहाति त्वां गतासुमपि मानद ।
सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ॥ १९ ॥

---

# वर्षावर्णनम् ।

स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च ।
वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥
अयं स कालः सम्प्राप्तः समयोऽद्य जलागमः ।
सम्पश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ २ ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३ ॥

शक्यमम्बरमारुह्य मेघसोपानपंक्तिभिः ।
कूटजार्जुनमालाभिरलङ्कर्तुं दिवाकरः ॥ ४ ॥
सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५ ॥
एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसन्तप्ता मही वाष्पं विमुञ्चति ॥ ६ ॥
मेघोदरविनिर्मुक्ताः कर्पूरदलशीतला ।
शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ॥ ७ ॥
एष फुल्लार्जुनः शैलः केतकैरभिवासितः ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ८ ॥
मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ ९ ॥
कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् ।
अन्तःस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ १० ॥
नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे ।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ ११ ॥
वृत्ता यात्रा नरेन्द्राणां सेना पथ्येव वर्त्तते ।
वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ १२ ॥

---

# सीताहनूमत्संलापः ।

तामब्रवीन्महातेजा हनूमान् मारुतात्मजः ।
शिरस्यञ्जलिमाधाय सीतां मधुरया गिरा ॥ १ ॥
का नु पद्मपलाशाक्षि क्लिन्नकौशेयवासिनी ।
द्रुमस्य शाखामालम्ब्य तिष्ठसि त्वमनिन्दिता ॥ २ ॥
किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम् ।
पुण्डरीकपलाशाभ्यां विप्रकीर्णमिवोदकम् ॥ ३ ॥
व्यञ्जनानि हि ते यानि लक्षणानि च लक्षये ।
महिषी भूमिपालस्य राजकन्या च मे मता ॥ ४ ॥
रावणेन जनस्थानाद् बलात् प्रमथिता यदि ।
सीता त्वमसि भद्रं ते तन्ममाचक्ष्व पृच्छतः ॥ ५ ॥
यथा हि तव वै दैन्यं रूपं चाप्यतिमानुषम् ।
तपसा चान्वितो वेशस्त्वं राममहिषी ध्रुवम् ॥ ६ ॥
सा तस्य वचनं श्रुत्वा रामकीर्तनहर्षिता ।
उवाच वाक्यं वैदेही हनुमन्तमुपाश्रितम् ॥ ७ ॥
पृथिव्यां राजसिंहानां मुख्यस्य विदितात्मनः ।
स्नुषा दशरथस्याहं शत्रुसैन्यप्रणाशिनः ॥ ८ ॥
दुहिता जनकस्याहं वैदेहस्य महात्मनः ।
सीतेति नाम्ना चोक्ताहं भार्या रामस्य धीमतः ॥ ९ ॥

वसतो दण्डकारण्ये तस्याहममितौजसः ।
रक्षसापहृता भार्या रावणेन दुरात्मना ॥ १० ॥
द्वौ मासौ तेन मे कालो जीवितानुग्रहः कृतः ।
ऊर्ध्वं द्वाभ्यां तु मासाभ्यां ततस्त्यक्ष्यामि जीवितम् ॥ ११ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् हरिपुङ्गवः ।
दुःखाद् दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १२ ॥
अहं रामस्य सन्देशाद् देवि दूतस्तवागतः ।
वैदेहि कुशली रामः स त्वां कौशलमब्रवीत् ॥ १३ ॥
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ।
कृतवाञ्छोकसन्तप्तः शिरसा तेऽभिवादनम् ॥ १४ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।
प्रतिसंहृष्टसर्वाङ्गी हनूमन्तमथाब्रवीत् ॥ १५ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ १६ ॥
अहो स्वप्नस्य सुखता याहमेव चिराहृता ।
प्रेषितं नाम पश्यामि राघवेण वनौकसम् ॥ १७ ॥
स्वप्नेऽपि यद्यहं वीरं राघवं सहलक्ष्मणम् ।
पश्येयं नावसीदेयं स्वप्नोऽपि मम मत्सरी ॥ १८ ॥
नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् ।
न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥ १९ ॥

किन्नु स्याच्चित्तमोहोऽयं भवेद् वातगतिस्त्वियम् ।
उन्मादजो विकारो वा स्यादयं मृगतृष्णिका ॥ २० ॥
अथवा नायमुन्मादो मोहोऽप्युन्मादलक्षणः ।
सम्बुध्ये चाहमात्मानमिमं चापि वनौकसम् ॥ २१ ॥
भूय एव महातेजा हनूमान् पवनात्मजः ।
अब्रवीत् प्रश्रितं वाक्यं सीतां प्रत्ययकारणात् ॥ २२ ॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ २३ ॥
प्रत्ययार्थं तवानीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥ २४ ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम् ।
भर्तारमिव सम्प्राप्ता जानकी मुदिताऽभवत् ॥ २५ ॥
चारु तद्वदनं तस्यास्ताम्रशुक्लायतेक्षणम् ।
बभूव हर्षोदग्रं च राहुमुक्त इवोडुराट् ॥ २६ ॥
ततः सा ह्रीमती बाला भर्तुः सन्देशहर्षिता ।
परितुष्टा प्रियं कृत्वा प्रशशंस महाकपिम् ॥ २७ ॥
न हि त्वां प्राकृतं मन्ये वानरं वानरर्षभ ।
यस्य ते नास्ति सन्त्रासो रावणादपि सम्भ्रमः ॥ २८ ॥
दिष्ट्या च कुशली रामो धर्मात्मा सत्यसङ्गरः ।
लक्ष्मणश्च महातेजाः सुमित्रानन्दवर्धनः ॥ २९ ॥

कुशली यदि काकुत्स्थः किं न सागरमेखलाम् ।
महीं दहति कोपेन युगान्ताग्निरिवोत्थितः ॥ ३० ॥
अथवा शक्तिमन्तौ तौ सुराणामपि निग्रहे ।
ममैव तु न दुःखानामस्ति मन्ये विपर्ययः ॥ ३१ ॥
आशंसेयं हरिश्रेष्ठ क्षिप्रं मां प्राप्स्यते पतिः ।
अन्तरात्मा हि मे शुद्धस्तस्मिंश्च बहवो गुणाः ॥ ३२ ॥

---

# अयोध्याप्रत्यावर्तनम् ।

आरुरोह तदा रामस्तद् विमानमनुत्तमम् ।
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ॥ १ ॥
अनुज्ञातं च रामेण तद् विमानमनुत्तमम् ।
हंसयुक्तं महानादमुत्पपात विहायसम् ॥ २ ॥
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥ ३ ॥
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् ।
लङ्कामीक्षस्व वैदेहि निर्मितां विश्वकर्मणा ॥ ४ ॥
एतदायोधनं पश्य मांसशोणितकर्दमम् ।
हरीणां राक्षसानां च सीते विशसनं महत् ॥ ५ ॥

एष दत्तवरः शेते प्रमाथी राक्षसेश्वरः ।
तव हेतोर्विशालाक्षि निहतः सहबान्धवः ॥ ६ ॥
अत्र मन्दोदरी नाम भार्या तं पर्यदेवयत् ।
सपत्नीनां सहस्रेण सास्रेण परिवारिता ॥ ७ ॥
एतत् तु दृश्यते तीर्थं समुद्रस्य वरानने ।
यत्र समुद्रमुत्तीर्य तां रात्रिमुषिता वयम् ॥ ८ ॥
एष सेतुर्मया बद्धः सागरे लवणार्णवे ।
तव हेतोर्विशालाक्षि नलसेतुः सुदुष्करः ॥ ९ ॥
पश्य सागरमक्षोभ्यं वैदेहि वरुणालयम् ।
अपारमिव गर्जन्तं शङ्खशुक्तिसमाकुलम् ॥ १० ॥
हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ।
विश्रामार्थं हनुमतो भित्त्वा सागरमुत्थितम् ॥ ११ ॥
एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ।
सेतुबन्ध इति ख्यातं त्रैलोक्येन च पूजितम् ॥ १२ ॥
एषा सा दृश्यते सीते किष्किन्ध्या चित्रकानना ।
सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः ॥ १३ ॥
दृश्यतेऽसौ महान् सीते सविद्युदिव तोयदः ।
ऋष्यमूको गिरिवरः काञ्चनैर्धातुभिर्वृतः ॥ १४ ॥
अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ।
समयश्च कृतः सीते वधार्थं वालिनो मया ॥ १५ ॥

एषा सा दृश्यते पम्पा नलिनी चित्रकानना ।
त्वया विहीनो यत्राहं विललाप सुदुःखितः ॥ १६ ॥
अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ।
अत्र योजनबाहुश्च कबन्धो निहतो मया ॥ १७ ॥
दृश्यतेऽसौ जनस्थाने सीते श्रीमान् वनस्पतिः ।
जटायुर्निहतो यत्र पक्षिणां प्रवरो बली ॥ १८ ॥
एतत्तदाश्रमपदमस्माकं वरवर्णिनि ।
पर्णशाला तथा चित्रा दृश्यते शुभदर्शने ॥ १९ ॥
एषा गोदावरी रम्या प्रसन्नसलिला शुभा ।
अगस्त्यस्याश्रमश्चैष दृश्यते कदलीवृतः ॥ २० ॥
दृश्यते चैष वैदेहि शरभङ्गाश्रमो महान् ।
उपयातः सहस्राक्षो यत्र शक्रः पुरन्दरः ॥ २१ ॥
एते ते तापसा देवि दृश्यन्ते तनुमध्यमे ।
अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरोपमः ॥ २२ ॥
अस्मिन् देशे महाकायो विराधो निहतो मया ।
अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी ॥ २३ ॥
असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते ।
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥ २४ ॥
एषा सा यमुना दूराद् दृश्यते [illegible]त्रकानना ।
भरद्वाजाश्रमः श्रीमान् दृश्यते चैष मैथिलि ॥ २५ ॥

इयं च दृश्यते गङ्गा पुण्या त्रिपथगामिनी ।
शृङ्गवेरपुरं चैतद् गुहो यत्र सखा मम ॥ २६ ॥
एषा सा दृश्यते सीते राजधानी पितुर्मम ।
अयोध्या कुरु वैदेहि प्रणामं पुनरागता ॥ २७ ॥

---

## दूतसंवादः ।

देवि दैत्येश्वरः शुम्भस्त्रैलोक्ये परमेश्वरः ।
दूतोऽहं प्रेषितस्तेन त्वत्सकाशमिहागतः ॥ १ ॥
अव्याहताज्ञः सर्वासु यः सदा देवयोनिषु ।
निर्जिताखिलदैत्यारिः स यदाह शृणुष्व तत् ॥ २ ॥
मम त्रैलोक्यमखिलं मम देवा वशानुगाः ।
यज्ञभागानहं सर्वानुपाश्नामि पृथक् पृथक् ॥ ३ ॥
त्रैलोक्ये वररत्नानि मम वश्यान्यशेषतः ।
तथैव गजरत्नानि हृत्वा देवेन्द्रवाहनम् ॥ ४ ॥
क्षीरोदमथनोद्भूतमश्वरत्नं ममामरैः ।
उच्चैःश्रवससंज्ञं तत् प्रणिपत्य समर्पितम् ॥ ५ ॥
यानि चान्यानि देवेषु गन्धर्वेषूरगेषु च ।
रत्नभूतानि भूतानि तानि मय्येव शोभने ॥ ६ ॥

स्त्रीरत्नभूतां त्वां देवि लोके मन्यामहे वयम् ।
सा त्वमस्मानुपागच्छ यतो रत्नभुजो वयम् ॥ ७ ॥
मां वा ममानुजं वापि निशुम्भमुरुविक्रमम् ।
भज त्वं चञ्चलापाङ्गि रत्नभूतासि वै यतः ॥ ८ ॥
परमैश्वर्यमतुलं प्राप्स्यसे मत्परिग्रहात् ।
एतद् बुद्ध्या समालोच्य मत्परिग्रहतां व्रज ॥ ९ ॥
इत्युक्ता सा तदा देवी गम्भीरान्तःस्मिता जगौ—
सत्यमुक्तं त्वया नात्र मिथ्या किञ्चित्त्वयोदितम् ।
त्रैलोक्याधिपतिः शुम्भो निशुम्भश्चापि तादृशः ॥ १० ॥
किन्त्वत्र यत्प्रतिज्ञातं मिथ्या तत् क्रियते कथम् ।
श्रूयतामल्पबुद्धित्वात्प्रतिज्ञा या कृता पुरा ॥ ११ ॥
यो मां जयति संग्रामे यो मे दर्पं व्यपोहति ।
यो मे प्रतिबलो लोके स मे भर्ता भविष्यति ॥ १२ ॥
तदागच्छतु शुम्भोऽत्र निशुम्भो वा महासुरः ।
मां जित्वा किं चिरेणात्र पाणिं गृह्णातु मे लघु ॥ १३ ॥
दूतः—अवलिप्तासि मैवं त्वं देवि ब्रूहि ममाग्रतः ।
त्रैलोक्ये कः पुमांस्तिष्ठेदग्रे शुम्भनिशुम्भयोः ॥ १४ ॥
अन्येषामपि दैत्यानां सर्वे देवा न वै युधि ।
तिष्ठन्ति सम्मुखे देवि किं पुनः स्त्री त्वमेकिका ॥ १५ ॥
इन्द्राद्याः सकला देवास्तस्थुर्येषां न संयुगे ।
शुम्भादीनां कथं तेषां स्त्री प्रयास्यसि सम्मुखम् ॥ १६ ॥

सा त्वं गच्छ मयैवोक्ता पार्श्वं शुम्भनिशुम्भयोः ।
केशाकर्षणनिर्धूतगौरवा मा गमिष्यसि ॥ १७ ॥
देवी—एवमेतद् बली शुम्भो निशुम्भश्चेति वीर्यवान् ।
किं करोमि प्रतिज्ञा मे यदनालोचिता पुरा ॥ १८ ॥
स त्वं गच्छ मयोक्तं ते यदेतत् सर्वमादृतः ।
तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु यत् ॥ १९ ॥

---

## मध्याह्नः ।

वैतालिकः—जयतु जयतु देवः । उपारूढो मध्याह्नः । तथा हि ।

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दूत्क्षेपान् पिपासुः परिपतति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥

---

# पुत्रविजयः ।

( प्रविश्य ) कञ्चुकी—देव, अयं देवस्य सेनापतेः पुष्य-मित्रस्य सकाशात्सप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः ।

देवी—अहो, ततोमुखमेव नो हृदयम् । श्रोष्यामि तावद् गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम् । अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः ।

राजा—( लेखं गृहीत्वा वाचयति ) स्वस्ति । यज्ञशरणात् सेनापतिः पुष्यमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्येदमनुदर्शयति । विदितमस्तु । योऽसौ राजसूययज्ञ-दीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपावर्तनीयो निरर्गलस्तुरङ्गो विसृष्टः स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः । तत उभयोः सेनयोर्महाना-सीत्सम्मर्दः ।

( देवी विषादं नाटयति )

राजा—कथमीदृशं संवृत्तम् । ( शेषं पुनर्वाचयति )

ततः परान्पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १ ॥

देवी—अनेनाश्वस्तं मे हृदयम् ।

राजा—( शेषं पुनर्वाचयति ) सोऽहमिदानीमंशुमतेव

सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति।

राजा—अनुगृहीतोऽस्मि।

परिव्राजिका—दिष्ट्या पुत्रविजयेन दम्पती वर्धेते।

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः ॥ २ ॥

---

## चित्रफलकम्।

( प्रविश्य चित्रफलकहस्ता ) चतुरिका—इयं चित्रगता भर्त्री। ( चित्रफलकं दर्शयति। )

माधव्यः—साधु वयस्य। मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु।

सानुमती—अहो राजर्षेर्निपुणता। जाने सख्यग्रतो मे वर्तत इति।

माधव्यः—भोः, इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वाश्च दर्शनीयाः। कतमात्र तत्रभवती शकुन्तला।

सानुमती–अनभिज्ञः खल्वीदृशस्य रूपस्य मोघदृष्टिरयं जनः।

राजा—त्वं तावत्कतमां तर्कयसि।

माधव्यः—( निर्वर्ण्य ) अहं तर्कयामि 'यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशान्तेन, उद्भिन्नस्वेदबिन्दुना वदनेन, विशेषतोऽवस्रस्ताभ्यां बाहुभ्याम्, अवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता, सा शकुन्तला, इतरे सख्यौ' इति ।

राजा—निपुणो भवान् । चतुरिके, अर्धलिखितमेतद् विनोदस्थानम् । गच्छ वर्तिकां तावदानय ।

माधव्यः—भोः, अपरं किमत्र लेखितव्यम् ।

सानुमती—यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालेखितुकामो भवेत् ।

राजा—श्रूयताम्—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी ।
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ ३ ॥

माधव्यः—( आत्मगतम् ) यथाहं पश्यामि, पूरयितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः । ( प्रकाशम् ) भोः, किन्नु तत्रभवती रक्तकुवलयशोभिनाऽग्रहस्तेन मुखमावार्य चकितचकितेव स्थिता । ( सावधानं निरूप्य ) आः, एष कुसुमरसपाटच्चरस्तत्रभवत्या वदनकमलमभिलङ्घते मधुकरः ।

राजा—ननु वार्यतामेष धृष्टः ।

माधव्यः--( विहस्य ) भोः, चित्रं खल्वेतत् ।

राजा--कथं चित्रम् ।

सानुमती--अहमपीदानीमवगतार्था, किं पुनर्यथालिखितानुभाव्येषः । अभिज्ञानशाकुन्तलम् षष्ठोऽङ्कः श्लोक १८ ।

---

षष्ठोऽङ्कः पृष्ठ १२८

## प्रजावात्सल्यम् ।

( प्रविश्य पत्रहस्ता ) प्रतीहारी--जयतु जयतु देवः । देव, अमात्यो विज्ञापयति 'अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितम् । तद्देवः पत्रारूढं प्रत्यक्षीकरोतु' इति ।

राजा--इतः पत्रं दर्शय । ( प्रतीहारी उपनयति । )

राजा--( अनुवाच्य ) कथम् । 'समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी । राजगामी तस्यार्थसञ्चयः' इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । वेत्रवति, बहुधनत्वाद् बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि काचिद् आपन्नसत्त्वा तस्य भार्यासु स्यात् ।

प्रतीहारी--देव, इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते ।

राजा--ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ, एवममात्यं ब्रूहि ।

प्रतीहारी--यद् देव आज्ञापयति । ( प्रस्थिता । )

राजा--एहि तावत् ।

प्रतीहारी--इयमस्मि ।

राजा--किमनेन सन्ततिरस्ति नास्तीति ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥२२॥

प्रतीहारी--एवं नाम घोषयितव्यम् । ( निष्क्रम्य पुनः प्रविश्य ) काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् ।

६ अंक श्लोक २३ अभिज्ञानशाकुन्तल

## ऐन्द्रजालिकः ।

( प्रविश्य ) काञ्चनमाला--जयतु जयतु भर्ता । भर्तः, देवी विज्ञापयति--'एष खलूज्जयिनीतः संवरणसिद्धिनामैन्द्रजालिक आगतः । तत्प्रेक्षतां भर्ता । '

राजा--अस्ति नः कौतुकमैन्द्रजालिके । तदेनं शीघ्रं प्रवेशय ।

काञ्चनमाला--यद् भर्ताज्ञापयति । (निष्क्रम्य पिच्छिकाहस्तेनैन्द्रजालिकेन सह प्रविश्य ) भर्तः, एष ऐन्द्रजालिकः ।

ऐन्द्रजालिकः---( उपसृत्य ) जयतु जयतु महाराजः। ( पिच्छिकां भ्रामयित्वा बहुधा हास्यं कृत्वा ) महाराज कौशाम्बीपते,—

राजा---भद्र, तिष्ठ तावत्। काञ्चनमाले, उच्यतां देवी 'युष्मदीय एवायमैन्द्रजालिकः, विजनीकृतश्चायमुद्देशः। तदागच्छ सहितावेव पश्यावः।'

काञ्चनमाला—यद् भर्ताज्ञापयति। ( निष्क्रम्य वासवदत्तया सह प्रविशति। )

वासवदत्ता—( उपसृत्य ) जयत्वार्यपुत्रः।

राजा—देवि, इहस्थावेव पश्यावस्तावत्। ( वासवदत्तोपविशति। )

राजा—भद्र, प्रस्तूयतामिन्द्रजालम्।

( प्रविश्य ) वसुन्धरा—( राजानमुपसृत्य ) जयतु जयतु भर्ता। अमात्ययौगन्धरायणो देवस्य चरणयुगल इदं विज्ञापयति–'एष खलु विक्रमबाहुना प्रधानामात्यो वसुभूतिरनुप्रेषितः। तदर्हसि देव, प्रेक्षितुम्। अहमपि कार्यशेषं समाप्यागत एव।

वासवदत्ता—आर्यपुत्र, तिष्ठतु तावदिन्द्रजालम्। मातुलकुलादार्योऽमात्यप्रधानो वसुभूतिरागतः। तदेनं तावत् प्रेक्षतामार्यपुत्रः।

राजा—यथाह देवी। ( ऐन्द्रजालिकं प्रति ) भद्र, विश्रम्यतामिदानीम्।

ऐन्द्रजालिकः—यद् देव आज्ञापयति । ( निष्क्रामन् ) एकं पुनर्मम खेलनकमवश्यं देवेन प्रेक्षितव्यम् ।

राजा—भद्र, एवम् । द्रक्ष्यामः । वसन्तक, प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः ।

वसन्तकः—यद्देव आज्ञापयति । ( निष्क्रान्तः । )

( ततः प्रविशति वसन्तकेन प्रत्युद्गम्यमानो वसुभूतिः । )

वसन्तकः—भोः, एष महाराजः । तदुपसर्पत्वमात्यः ।

वसुभूतिः—( उपसृत्य ) विजयतां महाराजः ।

राजा—( उत्थाय ) अभिवादये ।

वसुभूतिः—अतिश्रेयांस्त्वं भूयाः ।

वासवदत्ता—आर्य, प्रणमामि ।

वसुभूतिः—आयुष्मति, वत्सराजसदृशं पुत्रमाप्नुहि ।

( सर्वे उपविशन्ति । नेपथ्ये कलकलः । )

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन् क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥

( सर्वे संभ्रान्ताः पश्यन्ति । )

राजा—कथमन्तःपुरेऽग्निः । ( ससम्भ्रममुत्थाय ) कष्टं देवी वासवदत्ता दग्धा ।

वासवदत्ता—आर्यपुत्र, परित्रायस्व परित्रायस्व ।

राजा—अये कथमतिसम्भ्रमात् पार्श्वस्थापि देवी नोपलक्षिता। (देव्याः पाणिं गृहीत्वा) देवि, समाश्वसिहि समाश्वसिहि।

वासवदत्ता—आर्यपुत्र, सागरिका विपद्यते। तत् परित्रायतामार्यपुत्रः।

राजा—कथं सागरिका विपद्यते। एष गच्छामि।

वसन्तकः—भोः, मा खलु साहसं कुरु।

राजा—(ज्वलनप्रवेशं नाटयित्वा धूमाभिभवं नाटयति।)

वासवदत्ता—कथं मम दुःखकारिण्या वचनादेवं व्यवसितमार्यपुत्रेण। तदहमप्यार्यपुत्रमेवानुगमिष्ये।

वसन्तकः—(परिक्रामन्नग्रतो भूत्वा) भवति, अहमपि ते पथ्युपदेशको भवामि।

वसुभूतिः—कथं प्रविष्ट एव ज्वलनं वत्सराजः। तन्ममापि दृष्टराजपुत्रीविपत्तेर्युक्तमिहैवात्मानमाहुतीकर्तुम्।

(सर्वेऽग्निप्रवेशं नाटयन्ति।)

राजा—(अग्रतोऽवलोक्य सहर्षोद्वेगम्) कथमासन्नहुतवहा वर्तते सागरिका। तत् त्वरितमेनां सम्भावयामि। (त्वरितमुपसृत्य) अलं भयेन। एष त्वामितो नयामि। अवलम्बस्व माम्। कथं क्षणादपगतोऽयं सन्तापः। (पुरतो विलोक्य) अहो महदाश्चर्यम्। क्वासौ प्रज्वलनो हुताशनः। तदवस्थमेतदन्तःपुरम्। कथमचिन्त्यरूपमेतत्।

वासवदत्ता—(राज्ञः शरीरं परामृशन्ती सहर्षम्) दिष्ट्या अक्षतशरीर आर्यपुत्रः ।

वसुभूतिः--देव, दिष्ट्या वर्धसे ।

वसन्तकः--जयतु जयतु भवान् ।

राजा--(विचिन्त्य सवितर्कम्) किमिदमिन्द्रजालम् ।

वसन्तकः--भोः, मा सन्देहं कुरु । इन्द्रजालमेवेदम् । भणितं नाम तेनैन्द्रजालिकेन यथा 'अवश्यमेव ममैकं खेलनकं देवेन प्रेक्षितव्यम्' इति । तत् तदेवैतत् ।

---

## अप्सरोऽभिनयः ।

(ततः प्रविशतः भरतशिष्यौ ।)

प्रथमः--सखे पल्लव, महेन्द्रसदनं गच्छतोपाध्यायेन त्वमासनं प्रतिग्राहितः । अग्निशरणसंरक्षणाय स्थापितोऽहम् । अतः खलु पृच्छामि । अपि गुरोः प्रयोगेण दिव्या परिषदाराधिता ।

द्वितीयः--गालव, न जाने आराधिता न वेति । तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे लक्ष्मीस्वयंवरे तेषु तेषु रसान्तरेषु तन्मयासीत् । किन्तु--

गालवः--सदोषावकाश इव ते वाक्यशेषः ।

पल्लवः-आम् । तस्मिन्नुर्वश्या वचनं प्रमादस्खलितमासीत् ।

गालवः--कथमिव ।

पल्लवः--लक्ष्मीभूमिकायां वर्तमानोर्वशी वारुणीभूमिकायां वर्तमानया मेनकया पृष्टा–'सखि,समागता एते त्रैलोक्यसुपुरुषाः सकेशवा लोकपालाः । कतमस्मिंस्ते भावाभिनिवेशः' इति ।

गालवः—ततस्ततः ।

पल्लवः--ततस्तस्याः 'पुरुषोत्तमे' इति भणितव्ये 'पुरूरवसि' इति निर्गता वाणी ।

गालवः—भवितव्यतानुविधायीनीन्द्रियाणि । न खलु तामभिक्रुद्धो गुरुः !

पल्लवः—सा खलु शप्तोपाध्यायेन । महेन्द्रेण पुनरनुगृहीता ।

गालवः--कथमिव ।

पल्लवः--'येन ममोपदेशस्त्वया लङ्घितस्तेन न ते दिव्यं स्थानं भविष्यति' इत्युपाध्यायस्य शापः । महेन्द्रेण पुनः प्रेक्षणावसाने लज्जावनतमुखी भणिता–'यस्मिन् बद्धभावासि तं मे रणसहायं राजर्षिं पुरूरवसं यथाकाममुपतिष्ठस्व' इति ।

गालवः—सदृशं पुरुषान्तरविदो महेन्द्रस्य ।

पल्लवः--( सूर्यमवलोक्य ) कथाप्रसङ्गेनास्माभिरपराद्धाऽभिषेकवेला खलूपाध्यायस्य । तदेह्यस्य पार्श्ववर्तिनौ भवावः ।

( निष्क्रान्तौ । )

---

# मरीचि-वृत्तान्तः ।

देव, त्वदन्वेषणप्रसृते मित्रगणेऽहमपि महीमटन् 'अङ्गेषु गङ्गातटे बहिश्चम्पायाः कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिः' इति कुताश्चित्संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम् । न्यशामयं च तस्मिन्नाश्रमे कस्याचिच्चूतपादपस्यच्छायायां कमप्युद्विग्नवर्णं तापसम् । अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः 'क्वासौ भगवान्मरीचिः, तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम् , आश्चर्यज्ञानविभवो हि स महर्षिर्मह्यां विश्रुतः' इत्यवादिषम् । अथासावुष्णमायतं च निःश्वस्याशंसत्–

'आसीत्तादृशो मुनिरस्मिन्नाश्रमे । तमेकदा काचिदङ्गपुरीवतंसस्थानीया नर्तकी पर्यश्रुः सनिर्वेदमभ्येत्य कीर्णकेशास्तीर्णभूमिरभ्यवन्दिष्ट । तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत् । स किल कृपालुस्तं जनमार्द्रया गिराश्वास्यार्तिकारणं तां नर्तकीमपृच्छत् । सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत्––'भगवन् , ऐहिकस्य सुखस्याभाजनं जनोऽयमामुष्मिकाय कल्याणायार्तानुग्रहख्यातयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्नः' इति । तस्यास्तु जनन्युदञ्जलिः पलितशारकेशबन्धस्पृष्टमुक्तभूमिरभाषत–'भगवन्, अस्या मे दोषमेषा वो दासी

विज्ञापयति । दोषश्च मम स्वाधिकारानुष्ठापनम् । इयं ह्यतिक्रम्य स्वकुलधर्ममर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते । कुलस्त्रीवृत्तमेवाच्युतमनुतिष्ठासति । 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात्प्रस्थिता । सा चेदियमहार्य-निश्चया सर्व एव जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यते' इत्यरोदीत् ।

अथ सा युवतिस्तेन तापसेन 'भद्रे, ननु दुःखाकरोऽयं वनवासः । तस्य फलमपवर्गः स्वर्गो वा । प्रथमस्तु तयोः प्रकृष्ट-ज्ञानसाध्यः प्रायो दुःसम्पाद एव । द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः । तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्व' इति सानुकम्पमभिहिता 'यदीह भगवत्पादमूलमशरणम्, शरण-मस्तु मम कृपणाया हव्यवाहनो देव एव' इत्युदमनायत । स तु मुनिरनुविमृश्य तन्मातरमवदत्—'सम्प्रति गच्छ गृहान् । प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वेजिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति' इति । 'तथा' इति तस्याः प्रतियाते स्वजने सा नर्तकी तमृषिमलघुभक्तिर्वनतरुपोतालवालपूरणैर्देवतार्चन-कुसुमोच्चयावचयप्रयासैर्नैकविधोपहारकर्मभिः पुरहरार्थे च गन्ध-माल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्ग-सम्बन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसेव कालेनान्व-रञ्जयत् ।

एकदा च सा तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत् । अभूच्च घोषणा—'श्वः कौमुदोत्सवः' इति । उत्तरेद्युः स्नातानुलिप्तमारचितमञ्जुमालं तमृषिमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे कन्यकाशतपरिवृतस्य राज्ञः सान्निधौ स्मितमुखेन तेन 'भद्रे, भगवता सह निषीद' इत्यादिष्टा कृतप्रणामा सस्मितं न्यषीदत्। तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना 'देव, जितानयाहम् , अस्यै दास्यमद्यप्रभृत्यभ्युपेतं मया' इति प्रभुं प्राणंसीत् । विस्मयहर्षमूलश्च कोलाहलो लोकस्योदजिहीत । सा च नर्तकी तमृषिमभाषत—'भगवन्, अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः, स्वार्थ इदानीमनुष्ठेयः' इति । स त्वशनिहत इवोद्भ्राम्याब्रवीत्—'अयि, किमेतत्' इति । अथ सा सस्मितमवादीत्—'भगवन्, ययाद्य राजकुले मत्तः पराजयोऽभ्युपेतस्तस्याश्च मम च कस्मिंश्चित्संघर्षे 'महर्षिं मरीचिमावर्जितवतीव श्लाघसे' इति तयास्म्यहमधिक्षिप्ता। दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्तिषि । सिद्धार्था चास्मि त्वत्प्रसादात्' इति । स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवन्न्यवर्तिष्ट। यस्तयैवं कृतस्तपस्वी तमेव मां महाभाग मन्यस्व । स्वशक्तिनिषिक्तं रागमुद्धृत्य तयैव महद्वैराग्यमर्पितम् । आचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम् । अस्यामेव तावदङ्गपुर्यां चम्पायाम्' इति ।

अनुमतमुनिशासनस्त्वहमुत्थाय नगरायोदचलम् । अथ

भगवन्तं पुनः प्रवितततपःप्रभावप्रत्यापन्नदिव्यचक्षुषमुपसङ्गम्य तेनास्म्येवम्भूतत्वद्दर्शनमवगमितः।

कुमारचरितम् द्वितीयः उच्छ्वासः। पृष्ठ ७०

## अभिजाततस्करः।

अथाहमाप्तमुखेन सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुख-सन्दंशक-योगचूर्ण-योगवर्तिका-मानसूत्र-रज्जुप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे सन्धिं छित्वा पटभाससूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम्। नीलनीरदनिकरपीवरतमोनिबिडितायां राजवीथ्यां झटिति शतह्रदासम्पातमिव क्षणमालोकमलक्षयम्।

अथासौ नगरदेवतेव नगरमोषरोषिता निःसम्बाधवेलायां निःसृता सन्निकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। 'कासि वासु, क्व यासि' इति सदयमुक्ता त्रासगद्गदमगादीत्—'आर्य, पुर्यस्यामर्यवर्यः कुबेरदत्तनामा वसति। अस्म्यहं तस्य कन्या। मां जातमात्रां धनमित्रनाम्नेऽत्रत्यायैव कस्मैचिदिभ्यकुमाराया-भ्यजानाद् भार्यां मे पिता। स पुनरस्मिन्नत्युदारदया [redacted] वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्रति सत्यथोदारक इति

च प्रीतलोकाधिरोपितापरश्लाघ्यनामनि वरयत्येव तस्मिन् मां तरुणीभूतामधन इत्यदत्त्वाऽर्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता। तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसङ्केता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना तदगारमभिसरामि। तन्मां मुञ्च। गृहाणैतद्भाण्डम्' इत्युन्मुच्य मह्यमर्पितवती। दयमानश्चाहमब्रवम्—'एहि साध्वि, त्वां नयेयं त्वत्प्रियावसथम्' इति त्रिचतुराणि पदान्युदचलम्।

आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम्। दृष्ट्वैव प्रवेपमानां कन्यकामवदम्—'भद्रे, मा भैषीः। अस्त्ययमसिर्द्वितीयो मे बाहुः। अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः। शयेऽहं भावितविषवेगविक्रियः। त्वयाप्यमी वाच्याः—'निशि वयमिमां पुरीं प्रविष्टाः। दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन् सभागृहकोणे। यदि वः कश्चिन्मन्त्रवित् कृपालुः स एनमुज्जीवयन् मम प्राणानाहरेदनाथायाः' इति। सापि बाला गत्यन्तराभावाद्भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत्। अशयिषि चाहं भावितविषविक्रियः। तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्चोपक्रम्याकृतार्थः 'गत एवायं कालदष्टः। तथा हि। स्तब्धश्यावमङ्गम्, रुद्धा दृष्टिः, शान्त एवोष्मा।

शुचालं वासु, श्वोऽभिसात्करिष्यामः । कोऽतिवर्तते दैवम्' इति सहेतरैः प्रायात् ।

उत्थितश्चाहमुदारकाय तां नत्वाऽब्रवम्—'अहमस्मि कोऽपि तस्करः । त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमनैषम् । भूषणमिदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तदप्यर्पितवान् ।

---

## प्रव्रजिता ।

एषोऽस्मि पर्यटन्नेकदा गतो विदेहेषु । मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः क्षणमलिन्दभूमाववास्थिषि । तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्तत । 'किमेतदम्ब, कथय कारणम्' इति पृष्टा सकरुणमाचष्ट—

'जैवातृक, ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे वसुमतीप्रियंवदे सख्यमप्रतिममधत्ताम् । अथ प्रथमगर्भाभिनन्दितां तां च प्रियसखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत् । तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्षा

गतिमगमन्मगधराजः । मैथिलेन्द्रस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपथमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत् । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि । तत्र च मे शार्दूलनखावलीढनिपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणादलिक्षत् । भिल्लदारकैः स बालोऽपाहारि ।

सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्तुरन्तिकमुपतिष्ठासुरसहायतया यावद् व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत् । सा भृशं रुरोद । रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनम्, आत्मनश्च केनापि वनचरेण व्रणविरोपणम्, स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तितायाः निकृष्टजातिसंसर्गवैक्लव्यात् प्रत्याख्यानपारुष्यम्, तदक्षमेण चामुना विविक्ते विपिने स्वशिरःकर्तनोद्यमम्, अनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम्, आत्मनश्चोपयमनमित्यकथयत् । स पृष्टो मैथिलेन्द्रस्यैव कोऽपि सेवकः कारणविलम्बी तन्मार्गानुसारी जातः । सह तेन भर्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियं-

वदायाश्चादहाव। स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरसहिष्णुतयातिमात्रं चिरं प्रयुध्य बद्धः। देवी च बन्धनं गमिता। दग्धा पुनरहमस्मिन्नपि वार्धके हृतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्। दुहिता तु मम हृतजीविकाकृष्टा विकटवर्ममहादेवीं कल्पसुन्दरीं किलाशिश्रियत्। तौ चेद्राजपुत्रौ निरुपद्रवावेवावर्धिष्येतामियता कालेन तवेमां वयोवस्थामस्प्रक्ष्यताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुः' इति प्रमन्युरभिरुरोद।

श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो निगूढमभ्यधाम्—'यद्येवमम्ब, समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्धितश्च। वार्तेयमतिमहती। किमनया। सोऽहमस्मि' इति।

---

## कन्यापरीक्षा।

अस्ति द्रविडेषु काञ्ची नाम नगरी। तस्यामनेककोटिसारः श्रेष्ठिपुत्रः शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे—'नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम। तत्कथं नु गुणवद् विन्देयं कलत्रम्' इति। अथ परप्रत्ययाहृतेषु दारेषु यादृच्छिकीं सम्पत्तिमनभिसमीक्ष्य कार्ता-

न्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम । 'लक्षणज्ञोऽयम्' इत्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयाम्बभूवुः । यां काञ्चिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति—'भद्रे, शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्' इति । स हसितावधूतो गृहाद् गृहं प्रविश्याभ्रमत् ।

एकदा तु शिविषु कावेरीदक्षिणतीरेषु पट्टने सह पितृभ्यामवसितमहर्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां काञ्चन विरलभूषणां कुमारीं ददर्श । अस्यां संसक्तचक्षुश्चातर्कयत्—'अस्याः खलु कन्यकायाः सर्व एवावयवा नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा नविकटा मृजावन्तश्च । सेयमाकृतिर्न व्यभिचरति शीलम् । आसज्जति च मे हृदयमस्यामेव । तत् परीक्ष्यैनामुद्वहेयम् । अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्पराः' इति स्निग्धदृष्टिराचष्ट—'भद्रे, कच्चिदस्ति कौशलं शालिप्रस्थेनानेन सम्पन्नमाहारमस्मानभ्यवहारयितुम्' इति । ततस्तया वृद्धदासी साकूतमालोकिता । तस्य हस्तात् प्रस्थमात्रं धान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत् ।

सा कन्या तान् गन्धशालीन् संक्षुद्य तुषैरखण्डैस्तण्डुलान् पृथक् चकार । जगाद च धात्रीम्—'एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्णकाराः । तेभ्य इमान् दत्त्वा

लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितम्पचां स्थालीमुभे शरावे चाहर' इति । तथा कृते तयौदनं निष्पाद्येन्धनान्यन्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत् 'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलं चिञ्चाफलं च यथालाभमानय' इति । तथानुष्ठिते च तया द्वित्रानुपदंशानुपपाद्य धातृमुखेनाहाराय तमनोदयत् । सशेष एवान्धस्यसावतृप्यत् ।

परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये ।

---

## शुककथा ।

एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कथमपि पितुरहमेवैको विधिवशात्सूनुरभवम् । अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत् । अभिमतजायाविनाशशोकदुःखितोऽपि खलु तातः सुतस्नेहादन्तर्निगृह्य शोकमेकाकी मत्संवर्धनपर एवाभवत् । अतिपरिणतवयाश्च कुशचीरानुकारिणीमपगतोत्पतनसंस्कारां पक्षसन्ततिमुद्वहन्नुपारूढकम्पतया च सन्तापकारिणीमङ्गलग्नां जरामिव विधुन्वन्नकठोरशेफालिकाकुसुमनालपिञ्जरेण चञ्चुपुटेन परनीडनिपतिताभ्यः शालि-

वल्लरीभ्यस्तण्डुलकणानादायादाय तरुमूलनिपतितानि शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात्। प्रतिदिवसमात्मना च मदुपभुक्तशेषमकरोदशनम्।

एकदा प्रभाते प्रयातेषु यथाभिमतानि दिगन्तराणि शुककुलेषु, कुलायनिलीननिभृतशावकसनाथेऽपि निःशब्दतया शून्य इव तस्मिन् वनस्पतौ, स्वनीडावस्थित एव ताते, मयि च शैशवादसञ्जातबलसमुद्भिद्यमानपक्षपुटे तातस्य समीपवर्तिनि कोटरगते, सहसैव तस्मिन्महावने सन्त्रासितसकलवनचरः कम्पयन्निव तरून् मृगयाकोलाहलध्वनिरुदचरत्। आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम्। अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले मन्दीभूतभयोऽहमुपजातकुतूहलः पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य सन्त्रासतरलतारकः शैशवात् किमिदमिति समुपजातदिदृक्षस्तामेव दिशं चक्षुः प्राहिणवम्। अभिमुखमापतच्च तस्माद् वनान्तराद् अन्धकारितकाननमनेकसहस्रसंख्यं शबरसैन्यमद्राक्षम्। मध्ये च तस्यातिमहतः शबरसैन्यस्य प्रथमे वयसि वर्तमानमतिकर्कशत्वादायसमिव निर्मितं शबरसेनापतिमपश्यम्।

स किल शबरसेनापतिरटवीभ्रमणसमुद्भवं श्रममपनिनीषुरागत्य तस्यैव शाल्मलीतरोरधश्छायायामवतारितकोदण्डस्त्वरित-

परिजनोपनीतपल्लवासने समुपाविशत्। अन्यतमस्तु शबरयुवा ससम्भ्रममवतीर्य सन्निहितात् सरसो वैदूर्यद्रवानुकारि द्रुतमिव मुक्ताफलनिकरमत्यच्छतया स्पर्शानुमेयं हिमजडमरविन्दकोशरजःकषायमम्भः कमलिनीपत्रपुटे प्रत्यग्रोद्धृताश्च धौतपङ्कनिर्मलमृणालिकाः समुपाहरत्। आपीतसलिलश्च सेनापतिस्ता मृणालिकाः शशिकला इव सैंहिकेयः क्रमेणादशत्। अपगतश्रमश्चोत्थाय परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्यमानः शनैः शनैरभिमतं दिगन्तरमयासीत्।

एकतमस्तु जरच्छवरस्तस्मात् पुलिन्दवृन्दाद् अनासादितहरिणपिशितः पिशिताशन इवातिविकृतदशनः पिशितार्थी तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत। अन्तरिते च शबरसेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया दृष्ट्या गणयन्निव शुककुलकुलायस्थानानि सुचिरमारुरुक्षुस्तं वनस्पतिमा मूलादपश्यत्। उत्क्रान्तमिव तस्मिन् क्षणे तदालोकनभीतानां शुककुलानामसुभिः। किमिव हि दुष्करमकरुणानाम्। यतः स तमनेकतालतुङ्गमभ्रङ्कषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादपमारुह्यताननुपजातोत्पतनशक्तीन्, कांश्चिदल्पदिवसजातान् गर्भच्छविपाटलाञ्शाल्मलीकुसुमशङ्कामुपजनयतः, कांश्चिदुद्भिद्यमानपक्षतया नलिनसंवर्तिकानुकारिणः, कांश्चिदर्कफलसदृशान्, कांश्चिल्लोहितायमानचञ्चुकोटीनीषद्विघटितदलपुटपाटलमुखानां कमलमुकुलानां

श्रियमुद्वहतः, कांश्चिदनवरतशिरःकम्पव्याजेन निवारयत इव, प्रतीकारासमर्थान्, एकैकतया फलानीव तस्य वनस्पतेः शाखान्तरेभ्यः कोटरेभ्यश्च शुकशावकानग्रहीत् । अपगतासूंश्च कृत्वा क्षितावपातयत् ।

तातस्तु तं महान्तमकाण्ड एव प्राणहरमप्रतीकारमुपप्लवमुपनतमालोक्य द्विगुणतरोपजातवेपथुर्मरणभयादुद्भ्रान्ततरलतारकां विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन्नुच्छुष्कतालुरात्मप्रतीकाराक्षमः पक्षसम्पुटेनाच्छाद्य मां तत्कालोचितप्रतीकारं मन्यमानः स्नेहपरवशो मद्रक्षणाकुलः किंकर्तव्यताविमूढः क्रोडविभागेन मामवष्टभ्य तस्थौ । असावपि पापः क्रमेण शाखान्तरैः सञ्चरमाणः कोटरद्वारमागत्य जीर्णासितभुजङ्गभोगभीषणं प्रसार्य वामबाहुमतिनृशंसो मुहुर्मुहुर्दत्तचञ्चुप्रहारमुत्कूजन्तमाकृष्य तातमपगतासुमकरोत् । मां तु स्वल्पत्वाद् भयसम्पिण्डिताङ्गत्वात्सावशेषत्वादायुषः कथमपि पक्षसम्पुटान्तरगतं नालक्षयत् । उपरतं च तमवनितले शिथिलशिरोधरमधोमुखममुञ्चत् । अहमपि तच्चरणान्तराले प्रवेशितशिरोधरो निभृतमङ्कनिलीनस्तेनैव सहापतम् । अवशिष्टपुण्यतया तु पवनवशसम्पुञ्जितस्य महतः शुष्कपल्लवराशेरुपरि पतितमात्मानमपश्यम् । अङ्गानि येन मे नाशीर्यन्त ।

यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावदहमवशीर्णपर्णसुवर्णत्वादस्फुटोपलक्ष्यमाणमूर्तिः पितरमुपरतमुत्सृज्य नृशंस

इव प्राणपरित्यागयोग्येऽपि काले बालतया कालान्तरभुवः स्नेहरसस्यानभिज्ञो जन्मसहभुवा भयेनैव केवलमभिभूयमानः किञ्चिदुपजाताभ्यां पक्षाभ्यामीषत्कृतावष्टम्भो लुठन्नितस्ततः कृतान्तमुखकुहरादिव विनिर्गतमात्मानं मन्यमानो नातिदूरवर्तिनो दिवाप्यन्धकारितशाखान्तरस्याप्रविष्टसूर्यकिरणमतिगहनमपरस्यैव पितुरुत्सङ्गमतिमहतस्तमालविटपिनो मूलदेशमविशम् । अवतीर्य च स तेन समयेन क्षितितलविप्रकीर्णान् संहृत्य तान् शुकशिशूननेकलतापाशसंयतानाबध्य पर्णपुटेऽतित्वरितगमनः सेनापतिगतेनैव वर्त्मना तामेव दिशमगच्छत् ।

मां तु लब्धजीविताशं प्रत्यग्रपितृमरणशोकशुष्कहृदयमतिदूरपातादायासितशरीरं सन्त्रासजाता सर्वाङ्गोपतापिनी बलवती पिपासा परवशमकरोत् । 'अनया च कालकलया सुदूरमतिक्रान्तः स पापकृत्' इति किञ्चिदुन्नमितकन्धरो भयचकितया दृशा दिशोऽवलोक्य तृणेऽपि चलिते पुनः प्रतिनिवृत्त इति तमेव पदे पदे पापकारिणमुत्प्रेक्षमाणो निष्क्रम्य तस्मात्तमालतरुमूलात् सलिलसमीपमुपसर्तुं प्रयत्नमकरवम् । अजातपक्षतया च नातिस्थिरचरणसञ्चारस्य मुहुर्मुहुर्मुखेन पततो मुहुस्तिर्यङ्निपतन्तमात्मानमेकया पक्षपाल्या सन्धारयतः क्षितितलसंसर्पणश्रमातुरस्यानभ्यासवशादेकमपि दत्त्वा पदमनवरतमुन्मुखस्य स्थूलस्थूलं श्वसतो धूलिधूसरस्य संसर्पतो मम समभून्मनसि—

'अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु

जगति सर्वप्राणिनां प्रवृत्तयः। नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम्। एवमुपरतेऽपि सुगृहीतनाम्नि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि। धिङ् मामकरुणमतिनिष्ठुरमकृतज्ञम्। अहो सोढपितृमरणशोकदारुणं येन मया जीव्यते। उपकृतमपि नापेक्ष्यते। खलं हि खलु मे हृदयम्। मया हि लोकान्तरगतायामम्बायां नियम्य शोकवेगमा प्रसवादिवसात् परिणतवयसापि सता तैस्तैरुपायैर्मत्संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम्। अतिकृपणाः खल्वमी प्राणाः। यदुपकारिणमपि तातमद्यापि क्वापि गच्छन्तं नानुगच्छन्ति। सर्वथा न कञ्चिन्न खलीकरोति जीविततृष्णा। यदीदृगवस्थमपि मामयमायासयति जलाभिलाषः। मन्ये चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम सलिलपानबुद्धिः। अद्यापि दूर एव सरस्तीरम्। तथा हि। जलदेवतानूपुररवानुकारि दूरेऽद्यापि कलहंसविरुतमेतत्। अस्फुटानि श्रूयन्ते सारसरसितानि। अयं च विप्रकर्षादाशामुखविसर्पणविरलः सञ्चरति नलिनीखण्डपरिमलः। दिवसस्य चेयमतिकष्टा दशा वर्तते। तथा हि। रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनलधूलिनिकरमिव विकिरति करैः। अधिकामुपजनयति तृषाम्। आतपस्पर्शसंतप्तपांसुपटलदुर्गमा भूमिः। अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि। अप्रभुरस्म्यात्मनः। सीदति मे हृदयम्। अन्धकारतामुपयाति चक्षुः।

अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्योपपादयेत् ।

इत्येवं चिन्तयत्येव मयि—तस्मात्सरसो नातिदूरवर्तिनि तपोवने जाबालिर्नाम महामुनिः प्रतिवसति स्म । तत्तनयश्च हारीतनामा तापसकुमारकः सवयोभिरपरैस्तपोधनकुमारकैरनुगम्यमानस्तेनैव पथा तदेव कमलसरः सिस्नासुरुपागमत् । प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि । यतः स मां तदवस्थमालोक्य समुपजातदयः समीपवर्तिनमृषिकुमारकमन्यतममब्रवीत्—'अयं कथमपि शुकशिशुरसञ्जातपक्षपुट एव तरुशिखरादस्मात् परिच्युतः । श्येनमुखपरिभ्रष्टेन वानेन भवितव्यम् । तथा हि । अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोऽयमामीलितलोचनो मुहुर्मुहुर्मुखेन पतति, मुहुर्मुहुरत्युल्बणं श्वसिति, मुहुर्मुहुश्चञ्चुपुटं विवृणोति । न शक्नोति शिरोधरां धारयितुम् । तदेहि यावदेवायमसुभिर्न वियुज्यते तावदेव गृहाणेममवतारय सलिलसमीपम् ।' इत्यभिधाय तेन मां सरस्तीरमनाययत् । उपसृत्य च जलसमीपमेकदेशनिहितदण्डकमण्डलुरादाय स्वयं मां मुक्तप्रयत्नमुत्तानितमुखमङ्गुल्या कतिचित् सलिलबिन्दूनपाययत् । अम्भःशीकरकृतसेकं च समुपजातनवीनप्राणमुपतटप्ररूढस्य नलिनीपलाशस्य जलशिशिरायां छायायां निधाय समुचितमकरोत् स्नानविधिम् । अभिषेकावसाने च सकलेन तेन मुनिकुमारककदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैरगच्छत् ।

अनतिदूरमिव गत्वा काननैरुपगूढमतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् । तस्य च मध्यभागमलङ्कुर्वाणस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्याशोकतरोरधश्छायाया-मुपविष्टं समन्तान्महर्षिभिः परिवृतं भगवन्तं जाबालिमपश्यम् । अवलोक्य चाहमचिन्तयम्—

अहो प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति । तथा हि—एष विकचोत्पलवनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचनद्युतिशबलमभिनवशाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः । अयमुत्सृज्य मातरमजातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः प्रक्षरत्क्षीरधारमापिबति कुरङ्गशावकः सिंहीस्तनम् । एष मृणालकलापाशङ्किभिः शशिकरधवलं सटाभारमामीलितलोचनो बहु मन्यते द्विरदकलभैराकृष्यमाणं मृगपतिः । इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः स्नातेभ्यः फलानि । एते च न निवारयन्ति मदान्धा अपि गण्डस्थलभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि जातदयाः कर्णतालैः करिणः । किं बहुना । तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभा अचेतनास्तरवोऽपि सनियमा इवात्र लक्ष्यन्ते । किं पुनः सचेतनाः प्राणिनः ।

एवं चिन्तयन्तमेव मां तस्यैवाशोकतरोरधश्छायायामेकदेशे स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्तिनि कुशासने समुपाविशत् । आलोक्य तु मां सर्व एव मुनयः कुतोऽयमासादितः शुकशिशुरिति तमासीनमपृच्छन् । अथास्मत्सम्बद्धमालापमाकर्ण्य किञ्चिदुपजातकुतूहलो भगवाञ्जाबालिरीषदावलितकन्धरः पुण्यजलैः प्रक्षालयन्निव मामतिप्रशान्तया दृष्टया दृष्ट्वा सुचिरमुपजातप्रत्यभिज्ञान इव पुनः पुनर्विलोक्य 'स्वस्यैवाविनयस्य फलमनेनानुभूयते' इत्यवोचत् । सर्वैव सा तापसपरिषत् तच्छ्रुत्वा कौतूहलिन्युपनाथितवती तं भगवन्तम् 'आवेदय प्रसीद भगवन्, कीदृशस्याविनयस्य फलमनेनानुभूयते । कश्चायमासीज्जन्मान्तरे । विहगजातौ वा कथमस्य सम्भवः' ।

इत्येवमुपयाच्यमानस्तु तपोधनपरिषदा स महामुनिः प्रत्यवदत्—'अतिमहदिदमाश्चर्यमाख्यातव्यम् । अल्पशेषमहः । प्रत्यासीदति च नः स्नानसमयः । भवतामप्यतिक्रामति देवार्चनविधिवेला । तदुत्तिष्ठन्तु भवन्तः सर्व एव तावदाचरन्तु यथोचितं दिवसव्यापारम् । अपराह्णसमये भवतां पुनः कृतमूलफलाशनानां विश्रब्धोपविष्टानामादितः प्रभृति सर्वमावेदयिष्यामि । योऽयम् । यच्चानेन कृतमपरस्मिञ्जन्मनि । इह लोके च यथास्य सम्भूतिः । अयं च तावदपगतक्लमः क्रियतामाहारेण । नियतमयमप्यात्मनो जन्मान्तरोदन्तं स्वप्नोपलब्धमिव मयि कथयति

सर्वमशेषतः स्मरिष्यति।' इत्यभिदधदेवोत्थाय सह मुनिभिः स्नानादिकमुचितं दिवसव्यापारमकरोत्।

अनेन च समयेन परिणतो दिवसः। स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत्। विहाय धरणितलमुन्मुच्य कमलिनीवनानि शकुनय इव दिवसावसाने तपोवनतरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत। आलग्नरक्तातपच्छेदा मुनिभिरालम्बितालोहितवल्कला इवाश्रमतरवः क्षणमशोभन्त। अचिराच्च सिद्धकन्यकाविक्षिप्तसन्ध्यार्चनकुसुमशबलमिव तारकितं वियदराजत।

शनैः शनैश्च दूरोदिते भगवति हिमतेजसि सुधाधूलिपटलेनेव धवलीकृते चन्द्रातपेन जगत्यर्धयामावखण्डितायां विभावर्यां हारीतः कृताहारं मामादाय सर्वैस्तैः सह मुनिभिरुपसृत्य चन्द्रातपोद्भासिनि तपोवनैकदेशे वेत्रासनोपविष्टं नातिदूरवर्तिना जालपादनाम्ना शिष्येण मन्दमन्दमुपवीज्यमानं पितरमवोचत्—'तात, सकलेयमाश्चर्यश्रवणकुतूहलाकलितहृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते। व्यपनीतश्रमश्च कृतोऽयं पतत्रिपोतः।' इत्येवमुक्तस्तु स महामुनिरग्रतः स्थितं मामवलोक्य तांश्च सर्वानेकाग्राञ्छ्रवणपरान्मुनीन् बुद्ध्वा शनैः शनैरब्रवीत्—श्रूयतां यदि कुतूहलम्।

---

# मातृसन्देशः ।

स कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास—'कुमार, महादेवी विलासवती समाज्ञापयति—'इयं खलु कन्यका महाराजेन पूर्वं कुलूतराजधानीमवजित्य कुलूतेश्वरदुहिता पत्रलेखाभिधाना बालिका सती बन्दीजनेन सहानीयान्तःपुरपरिचारिकामध्यमुपनीता । सा मया विगतनाथा राजदुहितेति समुपजातस्नेहया दुहितृनिर्विशेषामियन्तं कालमुपलालिता संवर्धिता च । तदियमिदानीमुचिता भवतस्ताम्बूलकरङ्कवाहिनीति कृत्वा मया प्रेषिता । न चास्यामायुष्मता परिजनसामान्यदृष्टिना भवितव्यम् । बालेव लालनीया । स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया । शिष्येवोपदेष्टव्या । सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीया । दीर्घकालसंवर्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे । बलवानस्यां पक्षपातः । महाभिजनराजवंशप्रसूता चार्हतीयमेवंविधानि कर्माणि । नियतं स्वयमेवेयमतिविनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति । केवलमतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्यामविदितशीलश्चास्याः कुमार इति सन्दिश्यते । सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमाचिरमुचिता परिचारिका ते भवति ।' इत्यभिधाय विरतवचसि कैलासे

कृताभिजातप्रणामां पत्रलेखामनिमिषलोचनः सुचिरमालोक्य चन्द्रापीडो 'यथाज्ञापयत्यम्बा' इत्येवमुक्त्वा कञ्चुकिनं प्रेषयामास ।

---

सिद्धान्तवागीश एडिशन पृष्ठ ६९८

## समदुःखता ।

पुनः पप्रच्छ चैनां चन्द्रापीडो महाश्वेताम्—'भगवति, सा तव परिचारिका वनवासव्यसनामित्रं दुःखसब्रह्मचारिणी तरलिका क्व गता' इति । अथ साऽकथयत्—

'महाभाग, यत्तन्मया कथितममृतसम्भवमप्सरसां कुलं तस्मान्मदिरेति नाम्ना मदिरायतेक्षणा कन्यकाऽभूत् । तस्याश्चासौ सकलगन्धर्वकुलमुकुटकुड्मलपीठप्रातिष्ठितचरणो देवश्चित्ररथः पाणिमग्रहीत् । अपरिमितगुणगणाकृष्टहृदयश्चान्यवनितादुर्लभेन महादेवीशब्देन परं प्रीतः प्रसादमकरोत् । अन्योन्यप्रेमसंवर्धनपरयोश्च तयोः कालेनाश्चर्यभूतमेकजीवितमिव पित्रोरथवा सर्वस्यैव गन्धर्वकुलस्य जीवलोकस्य वा दुहितृरत्नमुदपादि कादम्बरीति नाम्ना । सा च मे जन्मनः प्रभृत्येकासनशयनपानाशना परं प्रेमस्थानमखिलविश्रम्भधाम द्वितीयमिव हृदयं बालमित्रम् । एकत्र तया मया च नृत्य-

गीतादिकलासु कृताः परिचयाः । शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणनिर्भरमपनीतो बालभावः । सा चामुनैव मदीयेन हतवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्–'नाहं कथाञ्चिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामि' इति । सखीजनस्य पुरतः सशपथमभिहितवती च—'यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित्कस्मैचिद् दातुमिच्छति तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामि' इति । सर्वं च तदात्मदुहितुः कृतनिश्चयं निश्चलभाषितं कर्णपरम्परया परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमशृणोत् ।

गच्छति काले समुपारूढनिर्भरयौवनामालोक्य स तां बलवदुपतापपरवशः क्षणमपि न धृतिमलभत । एकापत्यतया चातिप्रियतया च न शक्तः किञ्चिदपि तामभिधातुमित्यपश्यंश्चान्यदुपायान्तरम् 'इदमत्र प्राप्तकालम्' इति मत्वा तया महादेव्या मदिरया सहावधार्य क्षीरोदनामानं कञ्चुकिनम् 'वत्से महाश्वेते, त्वद्व्यतिकरणैव दग्धहृदयानामिदमपरमस्माकमुपस्थितम् । इदानीं तु कादम्बरीमनुनेतुं त्वं शरणम्' इति सन्दिश्य मत्समीपमद्यैव प्रत्यूषसि प्रेषितवान् । ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्धं सा तरलिका 'सखि कादम्बरि, किं दुःखितमपि जनमतितरां दुःखयसि । जीवन्तीमिच्छसि चेन्मां तत् कुरु गुरुवचनमवितथम्' इति सन्दिश्य

विसर्जिता । नातिचिरं गतायां च तस्यामनन्तरमेवेमां भूमि-मनुप्राप्तो महाभागः' इत्यभिधाय तूष्णीमभवत् ।

अथ क्षीणायां क्षपायामुषसि सन्ध्यामुपास्य शिलातलोपविष्टायां पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायां निर्वर्तितप्राभातिकविधौ चन्द्रापीडे, तरलिका षोडशवर्षवयसाऽप्राम्याकृतिना राजकुलसम्पर्कचतुरेण गन्धर्वदारकेण केयूरकनाम्नाऽनुगम्यमाना प्रत्यूषस्येव प्रादुरासीत् । आगत्य च 'कोऽयम्' इत्युपजातकुतूहला चन्द्रापीडं सुचिरमालोक्य महाश्वेतायाः समीपमुपसृत्य कृतप्रणामा सविनयमुपाविशत् । अनन्तरं चातिदूरानतेनोत्तमाङ्गेन प्रणम्य केयूरकोऽपि महाश्वेतादृष्टिनिसृष्टं नातिसमीपवर्ति शिलातलं भेजे । परिसमाप्तजपा तु महाश्वेता पप्रच्छ तरलिकाम्—'किं त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी, करिष्यति वा तदस्मद्वचनम्' इति । अथ सा तरलिका विनयावनतमौलिरीषदालम्बितकर्णपाशमतिमधुरया गिरा व्यजिज्ञपत्—'भर्तृदारिके, दृष्टा खलु मया भर्तृदारिका कादम्बरी सर्वतः कुशलिनी, विज्ञापिता च निखिलं भर्तृदुहितुः सन्देशम् । आकर्ण्य च यत्तया सन्ततमुक्तस्थूलाश्रुबिन्दुवर्षं रुदित्वा प्रतिसन्दिष्टं तदेष तयैव विसर्जितस्तस्या एव वीणावाहकः केयूरकः कथयिष्यति ।' इत्युक्त्वा विरराम ।

विरतवचसि तस्यां केयूरकोऽब्रवीत्—'भर्तृदारिके महाश्वेते, देवी कादम्बरी दृढदत्तकण्ठग्रहा त्वां विज्ञापयति—'यदियमागत्य

मामवदत्तरलिका तत् कथय किमयं गुरुजनवचनानुरोधः, किमिदं मच्चित्तपरीक्षणम्, किं गृहनिवासापराधनिपुणोपालम्भः, किं प्रेमविच्छेदाभिलाषः, किं भक्तजनपरित्यागोपायः, किं वा प्रकोपः। जानास्येव मे सहजप्रेमनिस्यन्दनिर्भरं हृदयम्। एवमतिनिष्ठुरं सन्दिशन्ती कथमसि न लज्जिता। तथा मधुरभाषिणी केनासि शिक्षिता वक्तुमप्रियम्। स्वस्थोऽपि तावत्क इव सहृदयः कनीयस्यवसानविरसे कर्मणीदृशे मतिमुपसर्पयेत्। किमुतातिदुःखाभिहतहृदयोऽस्मद्विधो जनः। सुहृद्दुःखखेदिते हि मनसि कैव सुखाशा, कैव निर्वृतिः, कीदृशाः सम्भोगाः, कानि वा हसितानि। येनेदृशीं दशामुपनीता प्रियसखी कथमतिदारुणं तमहं विषमिवाप्रियकारिणं कामं सकामं कुर्याम्। दिवसकरास्तमयविधुरासु नलिनीषु सहवासपरिचयाच्चक्रवाकयुवतिरपि पतिसमागमसुखानि परित्यजति। किमुत नार्यः। अपि च यत्र भर्तृविरहविधुरा परिहृतपरपुरुषदर्शना दिवानिशं निवसति प्रियसखी कथमिव तन्मम हृदयमपरः प्रविशेज्जनः। यत्र च भर्तृविरहाविधुरा तीव्रव्रतकर्शिताङ्गी प्रियसखी महत्कृच्छ्रमनुभवति तत्राहमवगणय्यैतत् कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि। कथं वा मम सुखं भविष्यति। त्वत्प्रेम्णा चास्मिन् वस्तुनि यया कुमारिकाजनविरुद्धं स्वातन्त्र्यमालम्ब्याङ्गीकृतमयशः, समवधीरितो विनयः, गुरुवचनमतिक्रामितम्, न गणितो लोकापवादः, वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा,

सा कथय कथमिव पुनरत्र प्रवर्तते। तदयमञ्जलिरुपरचितः, प्रणामोऽयम्, इदं च पादग्रहणम्। अनुगृहाण माम्। वनमितो गतासि मे जीवितेन सह। इति मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि।' इत्यभिधाय तूष्णीमभवत्।

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य 'गच्छ स्वयमेवाहमागत्य यथार्हमाचरिष्यामि' इत्युक्त्वा केयूरकं प्राहिणोत्। गते च केयूरके चन्द्रापीडमुवाच–'राजपुत्र, रमणीयो हेमकूटः। चित्रा च चित्ररथराजधानी। बहुकुतूहलः किम्पुरुषविषयः। पेशलो गन्धर्वलोकः। सरलहृदया महानुभावा च कादम्बरी। यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरु प्रयोजनम्, अदृष्टचरविषयकुतूहलि वा चेतः, मद्वचनमनुरुध्यते वा भवन्मतिः, सुखदायि वाश्चर्यदर्शनम्, अर्हामि वा प्रणयम्, इममप्रत्याख्यानयोग्यं वा जनं मन्यसे, समारूढो वा परिचयलेशः, अनुग्राह्यो वाऽयं जनः, ततो नार्हसि निष्फलां कर्तुमभ्यर्थनामिमाम्। इतो मयैव सह गत्वा हेमकूटमतिरमणीयतानिधानम्, तत्र दृष्ट्वा च मन्निर्विशेषां कादम्बरीम्, अपनीय तस्याः कुमतिमनोमोहविलसितम्, एकमहो विश्रम्य श्वोभूते प्रत्यागमिष्यसि। मम हि निष्कारणबान्धवं भवन्तमालोक्यैव दुःखान्धकारभाराक्रान्तेन महतः कालादुच्छ्वसितमिव चेतसा, श्रावयित्वा स्ववृत्तान्तमिमं सह्यतामिव गतः शोकः। दुःखितमपि जनं रमयन्ति सज्जनसमागमाः। पर-

सुखोपपादनपराधीनश्च भवादृशां गुणोदयः ।' इत्युक्तवतीं च चन्द्रापीडोऽब्रवीत्—'भगवति, दर्शनात् प्रभृति परवानयं जनः । कर्तव्येषु यथेष्टमशङ्कितया नियुज्यताम् ।' इत्यभिधाय तया सहैवोदचलत । १८ मार्च १८२१

---

सिद्धान्तवागीश एडीशन पृष्ठ ८०४

## पितृ-लेखः ।

स्वस्ति । उज्जयिनीतः सकलराजन्यशिखण्डशेखरीकृत-चरणारविन्दः परममाहेश्वरो महाराजाधिराजो देवस्तारा-पीडः सर्वसम्पदामायतनं चन्द्रापीडमुदञ्चच्चारुचूडामणि-मरीचिचक्रचुम्बिन्युत्तमाङ्गे चुम्बन्नन्दयति । कुशलिन्यः प्रजाः । किन्तु कियानपि कालो भवतोऽदृष्टस्य । बलवदुत्कण्ठितं नो हृदयम् । देवी च सहान्तःपुरैर्म्लानिमुपनीता । अतो लेख-वाचनविरतिरेव प्रयाणकालतां कल्याणिना नेतव्येति ।

---

## शमोपदेशः ।

ब्रह्मन् , न खलु साधुसेवितोऽयं पन्था येनासि प्रवृत्तः । निहन्त्येष परस्तात् । उद्दामप्रसृतेन्द्रियाश्वसमुत्थापितं हि रजः कलुषयति दृष्टिमनक्षजिताम् । कियद्दूरं वा चक्षुरीक्षते । विशु-

द्धया हि धिया पश्यन्ति कृतबुद्धयः सर्वानर्थानसतः सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि। क्षमा हि मूलं सर्वतपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता बुद्धिर्न त आत्मरागदोषं पश्यति। क्व महातपोभारवैवधिकता, क्व पुरोभागित्वम्। अतिरोषणश्चक्षुष्मानन्ध एव जनः। न हि कोपकलुषिता विमृशति मतिः कर्तव्यमकर्तव्यं वा। कुपितस्य प्रथममन्धकारीभवति विद्या, ततो भ्रुकुटिः। आदाविन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः। आरम्भे तपो गलति, पश्चात्स्वेदसलिलम्। पूर्वमयशः स्फुरति, अनन्तरमधरः। कथं लोकविनाशाय ते विषपादपस्येव जटावल्कलानि जातानि। अनुचिता खल्वस्य मुनिवेषस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः। शैलूष इव वृथा वहसि कृत्रिममुपशमशून्येन चेतसा तापसाकल्पम्। अल्पमपि न ते पश्यामि कुशलजातम्। अनेनातिलाघिम्नाद्याप्युपर्येव प्लवसे ज्ञानोदन्वतः। न खल्वनेडमूका एडा जडा वा सर्व एते महर्षयः। रोषदोषनिषद्ये स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्। एतानि तान्यात्मप्रमादस्खलितवैलक्ष्याणि यैर्याप्यतां यात्यविदग्धो जनः।

---

## राज-भृत्याः ।

वत्सौ, प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः । प्रायेण परमाणव इव समवायेष्वनुगुणीभूय द्रव्यं कुर्वन्ति पार्थिवं क्षुद्राः । क्रीडारसेन नर्तयन्तो मयूरतां नयान्ति बालिशाः । दर्पणमिवानुप्रविश्यात्मीयां प्रकृतिं संक्रामयन्ति पल्लविकाः । स्वप्ना इव मिथ्यादर्शनैरसद्बुद्धिं जनयन्ति विप्रलम्भकाः। गीतनृत्यहसितैरुन्मत्ततामावहन्त्युपेक्षिता विकारा इव वातिकाः । चातका इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीनाः । मानसे मीनमिव स्फुरन्तमेवाभिप्रायं गृह्णन्ति जालिकाः । यमपट्टिका इवाम्बरे चित्रमालिखन्त्युद्गीतकाः । शल्यं हृदये निक्षिपन्त्यतिमार्गणाः ।

---

## शरद्वर्णनम् ।

वनस्पतीनां सरसां नदीनां

तेजस्विनां कान्तिभृतां दिशां च ।

निर्याय तस्याः स पुरः समन्ता-

च्छ्रियं दधानां शरदं ददर्श ॥ १ ॥

तरङ्गसङ्गाच्चपलैः पलाशै-
ज्वालाश्रियं सातिशयां दधन्ति।
सधूमदीप्ताग्निरुचीनि रेजु-
स्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥

बिम्बागतैस्तीरवनैः समृद्धिं
निजां विलोक्यापहृतां पयोभिः।
कूलानि सामर्षतयेव तेनुः
सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥

निशातुषारैर्नयनाम्बुकल्पैः
पत्रान्तपर्यागलदच्छबिन्दुः।
उपारुरोदेव नदत्पतङ्गः
कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥

वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च निलीनभृङ्गैः।
परस्परां विस्मयवन्ति लक्ष्मीम्
आलोकयाञ्चक्रुरिवादरेण ॥ ५ ॥

दत्तावधानं मधुलेहिगीतौ
प्रशान्तचेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुकहंसनादां-
ल्लक्ष्ये समाधिं न दधे मृगावित् ॥ ६ ॥

गर्जन् हरिः साम्भसि शैलकुञ्जे
    प्रतिध्वनीनात्मकृतान्निशम्य ।
क्रमं बबन्ध क्रमितुं सकोपः
    प्रतर्कयन्नन्यमृगेन्द्रनादान् ॥ ७ ॥

तिग्मांशुरश्मिच्छुरितान्यदूरात्
    प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि
    तेजांसि भानोर्भुवि सम्भृतानि ॥ ८ ॥

दिग्व्यापिनी र्लोचनलोभनीया
    मृजान्वयाः स्नेहमिव स्रवन्तीः ।
ऋज्वायताः शस्यविशेषपङ्क्ती-
    स्तुतोष पश्यन् वितृणान्तरालाः ॥ ९ ॥

वियोगदुःखानुभवानभिज्ञैः
    काले नृपांशं विहितं ददद्भिः ।
आहार्यशोभारहितैरमायै-
    रैक्षिष्ट पुंभिः प्रचितान् स गोष्ठान् ॥ १० ॥

स्त्रीभूषणं चेष्टितमप्रगल्भं
    चारूण्यवक्राण्यपि वीक्षितानि ।
ऋजूंश्च विश्वासकृतः स्वभावान्
    गोपाङ्गनानां मुमुदे विलोक्य ॥ ११ ॥

विचित्रमुच्चैः प्लवमानमारात्
कुतूहलं त्रस्नु ततान तस्य ।
मेघात्ययोपात्तवनोपशोभं
कदम्बकं वातमजं मृगाणाम् ॥ १२ ॥
सितारविन्दप्रचयेषु लीनाः
संसक्तफेनेषु च सैकतेषु ।
कुन्दावदाताः कलहंसमालाः
प्रतीयिरे श्रोत्रसुखैर्निनादैः ॥ १३ ॥
न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥ १४ ॥

---

## हिमालयः ।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधींश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागाम्
अकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥

आमेखलं सञ्चरतां घनानां
छायामधःसानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥

पदं तुषारस्रुतिधौतरक्तं
यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तै-
र्मुक्ताफलैः केशरिणां किराताः ॥ ६ ॥

न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरबिन्दुशोणाः।
व्रजन्ति विद्याधरसुन्दरीणाम्
अनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥

यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन।
उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥

कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम्।
यत्र स्रुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥ ९ ॥

वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिसक्तभासः।
भवन्ति यत्रौषधयो रजन्याम्
अतैलपूराः शयनप्रदीपाः ॥ १० ॥

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसां सतीव ॥ ११ ॥

लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति बालव्यजनैश्चमर्यः ॥ १२ ॥
भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातै-
रासेव्यते भिन्नशिखण्डिबर्हः ॥ १३ ॥
सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान् परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १४ ॥

---

## राजदम्पत्योर्गुरुदर्शनयात्रा ।

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ १ ॥
स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ २ ॥

मा भूदाश्रमपीडेति परिमेयपुरःसरौ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३ ॥
सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ४ ॥
मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।
षड्जसंवादिनीः केका द्विधाभिन्नाः शिखण्डिभिः ॥५॥
परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ६ ॥
श्रेणीबन्धाद् वितन्वद्भिरस्तम्भां तोरणस्रजम्।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ७ ॥
पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ८ ॥
सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ९ ॥
ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम्।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ १० ॥
हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ११ ॥
काप्यभिख्या तयोरासीद् व्रजतोः शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ १२ ॥

तद्वद् भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ १३ ॥
स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ १४ ॥
वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ १५ ॥
आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ १६ ॥
सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ १७ ॥
आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ १८ ॥
अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ १९ ॥
अथ यन्तारमादिश्य धुर्यान् विश्रामयेति सः ।
तामवारोहयत् पत्नीं रथादवततार च ॥ २० ॥

६ मई सन् १९२

## कुमारजन्म ।

दिशः प्रसेदुर्मरुतो ववुः सुखाः
प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम् ॥ १ ॥

अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो
बभूवुरालेख्यसमर्पिता इव ॥ २ ॥

जनाय शुद्धान्तचराय शंसते
कुमारजन्मामृतसम्मिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः
शशिप्रभं छत्रमुभे च चामरे ॥ ३ ॥

निवातपद्मास्तिमितेन चक्षुषा
नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूरमिवेन्दुदर्शनाद्
गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ ४ ॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः
प्रमोदनृत्यैः सह वारयोषिताम् ।

न केवलं सद्मनि मागधीपतेः
पथि व्यजृम्भन्त दिवौकसामपि ॥ ५ ॥

न संयतस्तस्य बभूव रक्षितु-
र्विसर्जयेद् यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं
तदा पितॄणां मुमुचे स बन्धनात् ॥ ६ ॥

श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थवि-
च्चकार नाम्ना रघुमात्मसम्भवम् ॥ ७ ॥

पितुः प्रयत्नात्स समग्रसम्पदः
शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधिते-
रनुप्रवेशादिव बालचन्द्रमाः ॥ ८ ॥

उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥ ९ ॥

रथाङ्गनाम्नोरिव भावबन्धनं
बभूव यत्प्रेम परस्पराश्रयम् ।

विभक्तमप्येकसुतेन तत्तयोः
परस्परस्योपरि पर्यचीयत ॥ १० ॥
उवाच धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥ ११ ॥
अथोपनीतं विधिवद् विपश्चितो
विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति ॥ १२ ॥

---

# प्रबोधमङ्गलम् ।

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता ।
तामेकतस्तव बिभर्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्यपदावलम्बी ॥ १ ॥
निद्रावशेन भवताप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।

लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ २ ॥

तद् वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ३ ॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ४ ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ५ ॥

यावत् प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ६ ॥

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।

येषां विभान्ति तरुणारुणरागयोगाद्
भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७ ॥
दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ८ ॥
भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ताम्
अनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः ॥ ९ ॥

---

# इन्दुमती-स्वयंवरः।

अथ स्तुते वन्दिभिरन्वयज्ञैः
सोमार्कवंश्ये नरदेवलोके।
प्रध्मातशङ्खे परितो दिगन्तां-
स्तूर्यस्वने मूर्छति मङ्गलार्थे ॥ १ ॥
मनुष्यवाह्यं चतुरस्रयानम्
अध्यास्य कन्या परिवारशोभि।

विवेश मञ्चान्तरराजमार्गं
पतिंवरा क्लृप्तविवाहवेषा ॥ २ ॥

ततो नृपाणां श्रुतवृत्तवंशा
पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक् सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत्सुनन्दा ॥ ३ ॥

असौ शरण्यः शरणोन्मुखानाम्
अगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः
परन्तपो नाम यथार्थनामा ॥ ४ ॥

कामं नृपाः सन्तु सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ५ ॥

अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन कुरु प्रवेशे ।
प्रासादवातायनसंश्रितानां
नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ ६ ॥

एवं तयोक्ते तमवेक्ष्य किञ्चिद्
विस्रंसिदूर्वाङ्कमधूकमाला ।

ऋजुप्रणामक्रिययैव तन्वी
प्रत्यादिदेशैनमभाषमाणा ॥ ७ ॥

तां सैव वेत्रग्रहणे नियुक्ता
राजान्तरं राजसुतां निनाय ।
समीरणोत्थेव तरङ्गलेखा
पद्मान्तरं मानसराजहंसीम् ॥ ८ ॥

जगाद चैनामयमङ्गनाथः
सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारै-
रैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ ९ ॥

अनेन पर्यासयताश्रुबिन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनाम्
उन्मुच्य सूत्रेण विनैव हाराः ॥ १० ॥

निसर्गभिन्नास्पदमेकसंस्थम्
अस्मिन् द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या
त्वमेधि कल्याणि तयोस्तृतीया ॥ ११ ॥

अथाङ्गराजादवतार्य चक्षु-
र्याहीति जन्यामवदत्कुमारी ।

नासौ न काम्यो न च वेद सम्यग्
द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ १२ ॥

ततः परं दुःप्रसहं द्विषद्भि-
र्नृपं नियुक्ता प्रतिहारभूमौ ॥
निदर्शयामास विशेषदृश्यम्
इन्दुं नवोत्थानमिवेन्दुमत्यै ॥ १३ ॥

अवन्तिनाथोऽयमुदग्रबाहु-
र्यस्य प्रयाणेषु हयोत्थितानि ।
कुर्वन्ति सामन्तशिखामणीनां
प्रभाप्ररोहास्तमयं रजांसि ॥ १४ ॥

असौ महाकालनिकेतनस्य
वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभि-
र्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ १५ ॥

अनेन यूना सह पार्थिवेन
रम्भोरु कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु
विहर्तुमुद्यानपरम्परासु ॥ १६ ॥

तस्मिन्नभिद्योतितबन्धुपद्मे
प्रतापसंशोषितशत्रुपङ्के ।

बबन्ध सा नोत्तमसौकुमार्या
कुमुद्वती भानुमतीव भावम् ॥ १७ ॥

तामग्रतस्तामरसान्तराभाम्
अनूपराजस्य गुणैरनूनाम् ।
विधाय सृष्टिं ललितां विधातु-
र्जगाद भूयः सुदतीं सुनन्दा ॥ १८ ॥

सङ्ग्रामनिर्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्तवीर्यः ॥ १९ ॥

तस्यान्वये भूपतिरेष जातः
प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं
स्वभावलोलेत्ययशः प्रमृष्टम् ॥ २० ॥

अस्याङ्कलक्ष्मीर्भव दीर्घबाहो-
र्माहिष्मतीवप्रनितम्बकाञ्चीम् ।
प्रासादजालैर्जलवेणिरम्यां
रेवां यदि प्रेक्षितुमस्ति कामः ॥ २१ ॥

तस्याः प्रकामं प्रियदर्शनोऽपि
न स क्षितीशो रुचये बभूव ।

शरत्प्रमृष्टाम्बुधरोपरोधः
शशीव पर्याप्तकलो नलिन्याः ॥ २२ ॥

अथाङ्गदाश्लिष्टभुजं भुजिष्या
हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषीं सादितशत्रुपक्षं
बालामबालेन्दुमुखीं बभाषे ॥ २३ ॥

असौ महेन्द्राद्रिसमानसारः
पतिर्महेन्द्रस्य महोदधेश्च ।
यस्य क्षरत्सैन्यगजच्छलेन
यात्रासु यातीव पुरो महेन्द्रः ॥ २४ ॥

ज्याघातरेखे सुभुजो भुजाभ्यां
बिभर्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां साञ्जनबाष्पसेके
बन्दीकृतानामिव पद्धती द्वे ॥ २५ ॥

यमात्मनः सद्मनि संनिकृष्टो
मन्द्रध्वनित्याजितयामतूर्यः ।
प्रासादवातायनदृश्यवीचिः
प्रबोधयत्यर्णव एव सुप्तम् ॥ २६ ॥

अनेन सार्धं विहराम्बुराशे-
स्तीरेषु तालीवनमर्मरेषु ।

द्वीपान्तरानीतलवङ्गपुष्पै-
        रपाकृतस्वेदलवा मरुद्भिः ॥ २७ ॥

प्रलोभिताप्याकृतिलोभनीया
        विदर्भराजावरजा तयैवम् ।
तस्मादपावर्तत दूरकृष्टा
        नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ २८ ॥

सञ्चारिणी दीपशिखेव रात्रौ
        यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे
        विवर्णभावं स स भूमिपालः ॥ २९ ॥

तस्यां रघोः सूनुरुपस्थितायां
        वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः
        केयूरबन्धोच्छ्वसितैर्नुनोद ॥ ३० ॥

तं प्राप्य सर्वावयवानवद्यं
        व्यावर्ततान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य
        वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ३१ ॥

तस्मिन् समावेशितचित्तवृत्तिम्
        इन्दुप्रभामिन्दुमतीमवेक्ष्य ।

प्रचक्रमे वक्तुमनुक्रमज्ञा
सविस्तरं वाक्यमिदं सुनन्दा ॥ ३२ ॥

इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ३३ ॥

जातः कुले तस्य किलोरुकीर्तिः
कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे
शक्राभ्यसूयाविनिवृत्तये यः ॥ ३४ ॥

पुत्रो रघुस्तस्य पदं प्रशास्ति
महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसंभृतां यो
मृत्पात्रशेषामकरोद् विभूतिम् ॥ ३५ ॥

असौ कुमारस्तमजोऽनुजात-
स्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा
धुर्येण दम्यः सदृशं बिभर्ति ॥ ३६ ॥

कुलेन कान्त्या वयसा नवेन
गुणैश्च तैस्तैर्विनयप्रधानैः ।

त्वमात्मनस्तुल्यममुं वृणीष्व
रत्नं समागच्छतु काञ्चनेन ॥ ३७ ॥
ततः सुनन्दावचनावसाने
लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं
प्रत्यग्रहीत् संवरणस्रजेव ॥ ३८ ॥
सा चूर्णगौरं रघुनन्दनस्य
धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं
कण्ठे गुणं मूर्तमिवानुरागम् ॥ ३९ ॥

---

## शापनिवृत्तिः ।

स कदाचिदवेक्षितप्रजः
सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो
मरुतां पालयितेव नन्दने ॥ १ ॥
अथ रोधसि दक्षिणोदधेः
श्रितगोकर्णनिकेतमीश्वरम् ।

उपवीणयितुं ययौ रवे-
रुदगावृत्तिपथेन नारदः ॥ २ ॥

कुसुमैर्ग्रथितामपार्थिवैः
स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत् किल तस्य वेगवान्
अधिवासस्पृहयेव मारुतः ॥ ३ ॥

भ्रमरैः कुसुमानुसारिभिः
परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजं
सृजती बाष्पमिवाञ्जनाविलम् ॥ ४ ॥ २५ मई १९३२

अभिभूय विभूतिमार्तवीं
मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा
दयितोरःस्थलनिर्भरस्थितिम् ॥ ५ ॥

क्षणमात्रसखीमथोरसः
किल सा तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥ ६ ॥

प्रमदामनु संस्थितः शुचा
नृपतिः सन्निति वाच्यदर्शनात् ।

न चकार शरीरमग्निसात्
सह देव्या न तु जीविताशया ॥ ७ ॥

अथ तं सवनाय दीक्षितः
प्रणिधानाद् गुरुराश्रमस्थितः ।
अभिषङ्गजडं विजज्ञिवान्
इति शिष्येण किलान्वबोधयत् ॥ ८ ॥

असमाप्तविधिर्यतो मुनि-
स्तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं
प्रकृतौ स्थापयितुं ततश्च्युतम् ॥ ९ ॥

मयि तस्य सुवृत्त वर्तते
लघुसन्देशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार तां
हृदि चैनामुपधातुमर्हसि ॥ १० ॥

पुरुषस्य पदेष्वजन्मनः
समतीतं च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा
त्रितयं ज्ञानमयेन पश्यति ॥ ११ ॥

चरतः किल दुश्चरं तप-
स्तृणबिन्दोः परिशङ्कितः पुरा ।

प्रणिधाय समाधिभेदिनीं
हरिरस्मै हरिणीं सुराङ्गनाम् ॥ १२ ॥

स तपःप्रतिबन्धमन्युना
प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां
शमवेलाप्रलयोर्मिणा भुवि ॥ १३ ॥

भगवन् परवानयं जनः
प्रतिकूलाचरितं क्षमस्व मे ।
इति चोपनतां क्षितिस्पृशं
कृतवाना सुरपुष्पदर्शनात् ॥ १४ ॥

क्रथकैशिकवंशसम्भवा
तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं
विवशा शापनिवृत्तिकारणम् ॥ १५ ॥

तदलं तदपायचिन्तया
विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया
वसुमत्या हि नृपाः कलात्रिणः ॥ १६ ॥

---

# रामायणगानम् ।

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतु र्गुरुनोदितौ ॥ १ ॥
वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ ।
किं तद् येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ २ ॥
रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ३ ॥
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रात र्निर्वातेव वनस्थली ॥ ४ ॥
वयोवेषविसंवादी रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ५ ॥
उभयो र्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६ ॥
गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ७ ॥
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ८ ॥
स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम् ॥ ९ ॥

तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ १० ॥
ताः स्वचारित्र्यमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ११ ॥
इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः ।
शिष्यैरानाययामास स्वासिद्धिं नियमैरिव ॥ १२ ॥
अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ १३ ॥
स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ १४ ॥
काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ १५ ॥
जनास्तदालोकपथात् प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ १६ ॥
तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ १७ ॥
अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ १८ ॥
वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे देवि मामन्तर्धातुमर्हसि ॥ १९ ॥

एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवाद् भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ २० ॥
तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्ररशना साक्षात् प्रादुरासीद् वसुन्धरा ॥ २१ ॥
सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन् पातालमभ्यगात् ॥ २२ ॥

---

# अनायक-राजधानी ।

अथार्धरात्रे स्तिमितप्रदीपे
शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेशाम्
अदृष्टपूर्वां वनितामपश्यत् ॥ १ ॥
सा साधुसाधारणपार्थिवर्द्धेः
स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं
तस्याञ्जलिं बन्धुमतो बबन्ध ॥ २ ॥
अथानपोढार्गलमप्यगारं
छायामिवादर्शतलं प्रविष्टाम् ।

सविस्मयो दाशरथेस्तनूजः
प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ३ ॥

लब्धान्तरा सावरणेऽपि गेहे
योगप्रभावो न च लक्ष्यते ते ।
बिभर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम् ॥ ४ ॥

का त्वं शुभे कस्य परिग्रहो वा
किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां
मनः परस्त्रीविमुखप्रवृत्ति ॥ ५ ॥

तमब्रवीत्सा गुरुणानवद्या
या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः सम्प्रति वीतनाथां
जानीहि राजन्नधिदेवतां माम् ॥ ६ ॥

वस्वौकसारामभिभूय पूर्वं
सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्यवंश्ये
सति प्रपन्ना करुणामवस्थाम् ॥ ७ ॥

विशीर्णतल्पाट्टशतो निवेशः
पर्यस्तशालः प्रभुणा विना मे ।

विडम्बयत्यस्तनिमग्नसूर्यं
दिनान्तमुग्रानिलभिन्नमेघम् ॥ ८ ॥
निशासु भास्वत्कलनूपुराणां
यः सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः
स वाह्यते राजपथः शिवाभिः ॥ ९ ॥
आस्फालितं यत्प्रमदाकराग्रै-
र्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः
शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ १० ॥
वृक्षेशया यष्टिनिवासभङ्गा-
न्मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः
क्रीडामयूरा वनबर्हिणत्वम् ॥ ११ ॥
सोपानमार्गेषु च येषु रामा
निक्षिप्तवत्यश्चरणान् सरागान् ।
सद्योहतन्यङ्कुभिरस्रदिग्धं
व्याघ्रैः पदं तेषु निधीयते मे ॥ १२ ॥
चित्रद्विपाः पद्मवनावतीर्णाः
करेणुभिर्दत्तमृणालभङ्गाः ।

नखाङ्कुशाघातविभिन्नकुम्भाः
संरब्धसिंहप्रहृतं वहन्ति ॥ १३ ॥
स्तम्भेषु योषित्प्रतियातनानाम्
उत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गा-
न्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १४ ॥
कालान्तरश्यामसुधेषु नक्तम्
इतस्ततो रूढतृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि
हर्म्येषु मूर्छन्ति न चन्द्रपादाः ॥ १५ ॥
आवर्ज्य शाखाः सदयं च यासां
पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः
क्लिश्यन्त उद्यानलता मदीयाः ॥ १६ ॥
रात्रावनाविष्कृतदीपभासः
कान्तामुखश्रीवियुता दिवापि ।
तिरस्क्रियन्ते क्रिमितन्तुजालै-
र्विच्छिन्नधूमप्रसरा गवाक्षाः ॥ १७ ॥
बलिक्रियावर्जितसैकतानि
स्नानीयसंसर्गमनाप्नुवन्ति ।

उपान्तवानीरगृहाणि दृष्ट्वा
शून्यानि दूये सरयूजलानि ॥ १८ ॥
तदर्हसीमां वसतिं विसृज्य
मामभ्युपैतुं कुलराजधानीम् ।
हित्वा तनुं कारणमानुषीं तां
यथा गुरुस्ते परमात्ममूर्तिम् ॥ १९ ॥
तथेति तस्याः प्रणयं प्रतीतः
प्रत्यग्रहीत्प्राग्रहरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा
शरीरबन्धेन तिरोबभूव ॥ २० ॥

---

# भगवन्महिमा ।

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने ॥ १ ॥
रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ २ ॥
हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ ३ ॥

विरोधा
विरोधाभास

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ ४ ॥
चतुर्वर्गफलं ज्ञानं कालावस्था चतुर्युगा ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ ५ ॥
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ ६ ॥
बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ ७ ॥
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयःसन्निवृत्तये ॥ ८ ॥
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ ९ ॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ १० ॥
उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ११ ॥
महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ १२ ॥

## NOTES.

### नीतिश्लोकाः ।

गुणत्वमापन्नैः—Turned into a cord. हेतु—(Here) a mode or process. अमन्दता—Sharpness (also, lightness or purity as applying to पयः). विपश्चित्—A learned man. पङ्कच्छिद्—Clearing of mud. The fruit is popularly called कतक. निकष—(Here) a paste. आविल—Muddy.

P. 2. निःश्रीक—Faded. मराली—A goose. भ्रमराली—A line of bees. निस्तेजाः (—जस्)—Lacking fire or spirit. अभिभवास्पदम्—An object of scorn. मद······लिप्त—Ruttish (lit., whose broad temples are soiled with rut). सत्त्ववत्—Spirited. प्रभञ्जन—A storm. प्रणत—Bending (also, bowing). समुच्छ्रित—Tall (also, proud). कन्दुक—A ball. साधुवृत्त—Good-natured (also, well round as applying to the कन्दुक). भूतदया—Kindness to beings (as apposed to what is ordinarily understood by धर्म). अरोगिता—Good health (for that is the root of all happiness). सद्भाव—Good feeling (and not what ordinarily passes for स्नेह). परिच्छेद—Decision or discrimination (for that is the test of all learning).

## हंसमयूरीयोपाख्यानम् ।

नामधेय—The same as नामन् ( the affix here having no meaning of its own ). अकर्णधारा—Without a कर्णधार or pilot ( कर्ण here meaning a helm or rudder). विप्लवेत—Will come to ruin. पर्यङ्क—A sofa (represented here by a lotus). सुखासीन—Seated at ease. The affix in आसीन is शानच्. दग्धारण्य—Probably a name. अनयोः—Refers both to countries and kings.

P. 4. प्रकोपाय—Scil. भवति or some such word as कल्पते, सम्पद्यते etc. एकान्ततः—Extremely. कूपमण्डूक—A frog in a well, i.e., one with no experience of the world. फलच्छाया—फल and छाया in the case of the master would mean 'money' and 'shelter'.

P. 5. महान्—An adj. to गुणविस्तरः. गुणविस्तरः—A profusion of merits. अल्पतां याति—Attains smallness ( for slow appreciation in the case of the उपमेय and smallness of space in the case of the उपमान ). आधाराधेयभाव—The relation between container and contained. This applies equally to the उपमान and the उपमेय. In the former case, the container and the contained are respectively the दर्पण and the गजेन्द्र ( of course in image ), and in the latter they are the निर्गुण master and his servant's गुणविस्तर. प्रभूराजहंसः—Disjoin : प्रभुः राज—.Similarly, पुना राज्यम् disjoin as पुनः राज्यम्. देवपादान्—पाद implies respect intensified here

by its plural number. सर्वशास्त्रार्थपारग—Who has gone to the other end of (i.e. completely mastered) the themes of all the शास्त्रs or branches of learning (conceived here as an ocean). यदि······मस्ति—For words cost nothing. दौत्य—An embassy.

P. 6. अकालकुसुमानीव—Such flowers bode an evil. निदान—A cause. यथाव्यवहारम्—As convention would have it. शतं······विवदेत्—That is, will rather give a large sum (to pacify the party) than quarrel even when such quarrel is legitimate. द्वन्द्व—A quarrel. उपालम्भ—A taunt. प्रस्तु······ताम्—Come we to the point (प्रस्तुत=the matter in hand). प्रतिध्वान—An echo. नेत्र······कार—Construe विकार with both नेत्र and वक्त्र. ऊहन्ति—Guess.

P. 7. प्रणिधि—A spy. शास्त्र······ना—With the (apparent) object of studying शास्त्रs. तपस्वि······पेतैः—Disguised as ascetics (व्यञ्जन=a mark). द्वितीयत्वेन—As his companion. तद्गृह······तिष्ठतु—That is, as a प्रतिभू or surety. षट्कर्ण—Exposed to six ears (i. e. three persons). भिद्यते—Gets circulation. आत्मनाद्वितीयेन—(An अलुक्समास) Second including himself. That means only two persons—himself and the other one. Scil. जनेन. सहार्थे तृतीया. प्रतीहार—A porter. It also means a door, in which case the form should be प्रतीहारिन्. The lengthening of इ in प्रती is optional. कृतावास—Read दूतावास 'Envoys' quarters'.

P. 8. प्रतिवातम्—Against the wind. नदीरय—The current of a river. अदृष्टकर्मा (-र्मन्)—Having no practical knowledge.

P. 9. गलहस्तयति—(A नामधातु) Throttles. वृतमुखः—Cf. चारश्चक्षुर्महीभर्तुः (p.7).

P. 10. प्रकृतिमापन्नौ—Came to themselves. स्वर्गैकदेशः—Heaven in miniature (lit., a portion of heaven). शिष्ट—(Here) a courtier or councillor. व्यसनितया—Simply because one is fond of it. खड्ग······ङ्गम्—An embrace of (the enemy's) खड्गधारा (and not श्री). मौहूर्तिक—An astrologer. समा····कटकः—With the army encamped. दुर्गशोधन—Inspection of the fort.

P. 11. अविनय—Impertinence. साह···र्तिना—Fond exclusively of valour, i.e., resting on bravery alone. उपा...त्मना—Whose mind is harassed by plans, i. e. guided exclusively by policy.

P. 12. शक्यम्—An impersonal use. नये च शौर्ये च—That is, in the two combined. Cf. Raghu XVII. 47 'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् । अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥' तिरयति–Obscures. मा भैषीः—लुङ् with मा is reduced to the sense of लोट्. अदीर्घसूत्रता—Promptness. अवश्यम्भावः—Certainty. उपष्टम्भ—Support.

P. 13. पुरस्क्रियन्ताम्—Be honoured (lit., be placed in the front). आनृण्यम्—Discharge of debt. सिंहायते—(A नामधातु) Acts like a lion.

P. 14. एवमेवम्—Here he describes how a secret emissary—the crow—has already been appointed, and how he has been instructed to set fire to the enemy's fort. अनु...स्वरे—(An absolute construction) Even before the sun rose. सारसद्वितीयः—Accompanied by the crane. ममानुरोधात्—May mean either 'through my request' or 'for my sake'. The first will relate to the prohibition of the action; the second to the action prohibited. दुर्गाधिकारी—An officer in charge of the fort. मन्मां···शत्रुः—That is, they must kill me first and then enter. गुणग्राहिन्—An appreciator of others' merits. अनुरक्त—Loyal.

P. 15. अथ—If on the other hand. नरेशे...सरोरुहम् Construe one निमोलति (as also उदीयमाने) as a participle with both नरेशे and रवौ, and the other निमोलति (as also उदेति) as a finite verb with both जीवलोकः and सरोरुहम्. अन्तरित—Screened, shielded. सम्भूय—Having united. स्कन्धावार—A camp. पारक्य—Hostile. निष्कारण-बन्धु—A disinterested friend (or kinsman). विचेष्टित—A doing.

P. 16. वृक्षाग्रात् = वृक्षाग्रं प्राप्य (ल्यब्लोपे पञ्चमी). पति···च्यते—That is, comes to see his folly when it is too late. फलेन—With a reward. मनसा—That is, with good wishes. आस्पद—A place. सुखशोभार्थम्—For comfort and for glory.

P. 17. सुहृद्बलम्—The host of allies. सन्दे···स्थं कुर्यात्—That is, will risk (दोका = a swing). [illegible]—

Other than a fool. विग्राह्यः—( वि–ग्रह् + ण्यत् ) To be warred with. सन्धान—A treaty. भूतजय—Victory achieved. न मन्तव्यम्—Will not be approved. कोप—Rebellion. महाशय—High-souled.

P. 18. विश्वा…ज्ञानाम्—Reposing in confidence. विप्रलब्ध—Deceived.

P. 19. वृणते—Espouse. गुणलुब्धाः—Supplies the reason for the action. The गुण here points to विमृश्यकारिता. सम्पदः (f.)—Looked upon as brides here. चत्वारः—Viz., सामन्, दान, भेद and दण्ड. साध्यसाधने—In the achievement of the end (here, political success). दुर्विदग्ध—Puffed up (lit., ill trained). ताराच्छाये—(A बहुव्रीहि) Bearing reflections of stars.

P. 20. कुहकचकितः—Shocked by deceptions. पायस—A preparation of milk with rice and sugar. युष्मदायत्तम्—At your disposal. सम्भावितः—Honoured.

P. 21. समीहितम्—Desire.

## कवि-प्रतिभा ।

व्यसनिन्—Given to vices. भृङ्ग—A bee. धवलिते—For यशस् (or everything good and noble) is poetically white. पयःपारावार—The ocean of milk. परमपुरुष—(A paraphrase of पुरुषोत्तम) Viṣṇu. कपर्दिन्—Siva. करि……भौमम्—That is, ऐरावतम्. कुलिशभृत्—Indra. कलानाथ—The moon. कमलभवन—Brahmā.

P. 22. वैचित्र्यम्—For what was an ornament for the hand, viz. a कङ्कण, was found on the eye, and also, what was a decoration for the forehead, viz., a तिलक, was found on the hand. The meaning is that Bhoja had widowed the wives of his rivals, who, in consequence, through excessive weeping and repeated strikings on the breast had, respectively, wrinkles (appearing like कङ्कणs) on their eyes and black marks (like तिलकs) on their hands. मध्येमार्गम्—(An अव्ययीभाव, optional for the तत्पुरुष 'मार्गमध्यम्' or 'मार्गमध्ये'). The विभक्ति here is either द्वितीया or सप्तमी according as we connect it with प्रति or ददर्श. प्रत्यागच्छन्तम्—Construe : प्रति आगच्छन्तम् as two separate words. To take it as one word would give the sense of 'returning' which would not suit the text. वदान्य—Bountiful. शासनपत्रक—A plate of grant. कामपि—Unspeakable, uncommon. त्विषाम्पतिः—The sun. An अलुक् समास.

P. 23. राजचन्द्र-Take it as a रूपक (not उपमित) here. मिष—A pretext (like व्याज on the preceding page). जानुदघ्न—Knee-deep. The affix दघ्न implies 'measure'. भवादृशाः—That is, as bountiful as you.

P. 24. निर्यातम्—Got into, or conceived. Somewhat unusual in use. तृणकणायते—(A नामधातु) Is of no consequence as if it were a piece of straw; that is, he will effectively destroy his enemies, when angry, and lavishly bestow wealth, when pleased.

विदुषी—Feminine of विद्वस्. अपूर्व—Unlike ordinary fire which will consume grass. भूभृत···लोषु—In the camp of kings, i.e. on the battle field. Also 'in the ridges of mountains' as applying to fire. The meaning is: The houses of Bhoja's rivals are deserted, their inmates having either been killed or put to flight. जलद···जुते—Appears like a speck of cloud. आचष्टे—The root is चक्ष् 'to speak'. विरह—Caused either by death or discomfiture. कटाक्षोल्का—The moon's rise aggravates the pangs of separation and hence the angry look at him. व्रण···ङ्कः—A scar. That too is black.

P. 25. दानववैरिणा—By विष्णु (when he assumed the मोहिनीमूर्ति). पुरहर—(A paraphrase of त्रिपुरारि) Śiva. अभाव—For two halves make the whole thing. गङ्गा etc.—All Śiva's belongings. क्ष्मातल=पाताल. तल here means 'bottom' and not 'surface' as in भूतल. ईर्ष्ययेव—दृष्टि and दरिद्रता (both feminine) are here looked upon as co-wives (not disposed to live together). रोदसी—(Always dual) Heaven and earth. Construe: Your यशस् is the ocean, heaven and earth are the two halves of an oyster therein, and the disc of of the moon a pearl sprung from the same. केऽपि Some, i.e. laymen. जलनिधेः—From which it had been churned. परे—Others, viz. poets. सारङ्ग—A deer. कति-चित—Some, viz. पौराणिकs or mythologers. भूच्छायम्—Optional for भूच्छाया. परे—Others, viz. astronomers.

P. 26. दलित······श्यामम्—That is, darker than the jewel इन्द्रनील ( दलित=crushed, i. e. excelled ). दरीदृश्यते—( A यङन्त form ) Is distinctly seen. तत······क्ष्महे—The darkness which the moon dispels is conceived here as having been swallowed by it. अन्धतमसम्—An irregular कर्मधारय with अन्ध and तमस्. चित्तात्······जनः—That is, a wicked man will never find a hold in the estimation of the good.

## शिष्यपरीक्षा ।

पुरुषर्षभः—An उपमितसमास ( ऋषभ=a bull ). भास—A vulture.

P. 27. अङ्गिरसाम्—The derivative आङ्गिरस (meaning a descendant of अङ्गिरस् ) will, before plural terminations, reduce itself to its original ( अङ्गिरस् ). The same applies also to the derivatives of अत्रि, भृगु, कुत्स, वसिष्ठ and गोतम. गृह्य—Archaic for गृहीत्वा. वित······न्वानम्—धनुस् , when the last member of a बहुव्रीहि, will change itself into धन्वन्. वेद्धुम्—The root is व्यध् 'to pierce'.

P. 28. सव्यसाचिन्—Arjuna, so called because he could use both hands with equal facility. हृष्टतनूरुहः—With the hair ( on his body ) standing on end.

## पाण्डवसभा ।

महाराज—An address to जनमेजय by वैशम्पायन. शातकुम्भ—Gold. किष्कु—A cubit. अभिघ्नती—Eclipsing.

नवमेघ—The new cloud (i. e. of the rainy season) which is peculiarly dark. विष्ठिता—(विशेषेण स्थिता) Standing superb. विपाप्मा—Sanctifying. विगतक्लमा—Refreshing. छकृता—Goes with सभा below. दाशार्ही—Belonging to the दशार्हs or यादवs. सुधर्मा—A court of the gods. नलिनी—A lotus tank. वैदूर्य—A gem of a dark colour. सौगन्धिक—A lily. द्विज—A bird. काञ्चनैः—Made of gold.

P. 30. आचित—Covered over. मणिशिलापट्ट—A slab of marble. चिताम्—The same as आचिताम् above. लीलाः—(An adj. here) Graceful or amusing. परिचतुर्दशैः—Full (or exceeding) fourteen. निष्ठिताम्—Completed. अभिप्राय—A design in picture. नागसाह्वय—The city bearing the same name with नाग or हस्तिन्, i. e. हस्तिनापुर.

P. 31. सवासाः (-सस्)—With garments on. आकार—A sign of emotion. रक्षमाणः—(Archaic, or the प्रत्यय here is चानश् and not शानच्). रक्ष् means 'to conceal' here. प्रतरिष्यन्निव—As if he were going to cross (water). स्थलम्—Obj. to आरुरोह. पिहिताकारम्—Closed. पिहित is optional for अपिहित. स्फाटिकम्—Hence the delusion. प्रविशन्—Thinking that to be open. विघट्टयन्—Opening. वितताकारम्—Open. तद्वृत्तम् —Similar to that (the preceding one). प्रलम्भ—A deception. विशाम्पतिः—A king (विश्=a man). An अलुक् समास. गजसाह्वय—The same as नागसाह्वय, p. 30.

## शौनकोपदेशः ।

शौनक—A ऋषि so called. आत्म······कराः—Self-composing. व्यास······स्याम्—In detail and in brief. अनिष्ट—An evil or what is not liked. इष्टविवर्जन—Loss of what is dear. चतुर्भिः—Namely, those enumerated in the first half of the verse. क्रिया······द्वय—Namely, प्रतिकार and अविचिन्तन given in the same śloka. आधिव्याधि—The first is a mental disease, the second a physical. वैद्याः—Either physicians or the learned. The word 'doctor' would be a happy rendering in either sense. मानसस्य—Scil. दुःखस्य. स्नेह—Attachment.

P. 33. राग—The same as स्नेह above. विप्रयोग—( Commonly वियोग ) separation ( from worldly objects ) as opposed to समागम or union in the same śloka. त्यागिन्—A recluse or सन्न्यासिन्. दोषदर्शी—Who detects evil in the worldly pursuit. विरागं भजते—Enjoys dispassion, i.e. is a real त्यागिन्. निर्वैरः—Freed from enmity or hatred. निरवग्रहः—Free from attachment. The meaning of the verse is: One is not a त्यागिन् by mere aloofness from the world, but that person is a real त्यागिन् ( विरागं भजते ) who, while living in the world, perceives its evil and is unmoved by hatred and love. मित्रेभ्यः = मित्राणि प्राप्य ( ल्यब्लोपे पञ्चमी ). Similarly construe धनसञ्चयात्. समुत्थम्—Scil. स्नेहम्. काम, इच्छा, तृष्णा—Explain respectively as the primitive

desire for an object, the desire for an object for the second time and insatiety on the repeated experience of an object. पापानुबन्धिनी—Leading to a series of evils. जीर्यतः—Sc. जनस्य. प्राणान्तिक—Fatal. The proper form should be प्राणान्तक. त्यजतः—Construe like जीर्यतः above. राजतः—From a king. Such would be in the shape of taxes and other impositions. सलिलात्—Such as from a deluge or a shipwreck. अर्थश्रेयस्—The good attainable by wealth.

P. 34. दुःखम्—With difficulty. परित्यक्तुम्—Sc. शक्याः. अनीहार्थ—Wealth gained without exertion (i. e. at random). प्रक्षा······णाम्—So the English proverb: Prevention is better than cure. (नस्पर्शनम्—a compound, optional for अस्पर्शनम्). अर्थतः—In respect of wealth.

## सौभाभियानम् ।

सौभ—An aerial city akin to an aeroplane. अभियान—Invasion, attack. श्रौतश्रव—शिशुपाल (so named after his mother श्रुतश्रवस्). द्वारवती—Otherwise called द्वारका.

P. 35. उपशल्य—The outskirt of a village. प्रतोली—A high road. अट्ट—Food. अट्टालक—A room on the top of a house. गोपुर—A gate. उष्ट्रिका—A vessel of earth or leather. भेरी, पणव, आनक—Kinds of drums. शतघ्नी—A kind of fire-arm. गुल्म—A watch-tower. सङ्क्रम—A river-bridge. निचित—Covered

over. असुद्र—Without a मुद्रा or pass. वृष्ण्यन्धक—The वृष्णिs and अन्धकs are two branches of the यादव family. भूरिदक्षिणा—Abounding in gallants. आहुक—That is, उग्रसेन. उपविवेश—Encamped. व्यवस्थाप्य—Having restored to order. दंशित—Equipped. हरि—A horse. व्यात्तानन—Gaping. The root in व्यात्त is दा.

P. 36. कुलोद्वह—An upholder of the family, i.e. a descendant. कामग—Moving at will. Refers to the सौभ. रणाजिर—A battle field (अजिर=a courtyard). जवन—Swift. रथप्रणुत्—A destroyer of the enemy's chariot. विनीत—Trained. पृतना—An army. अप-यान—A retreat. वृष्ट······परैः—Which is natural for a warrior flying. अप्यापत्स्य—Even it I were to die.

P. 37. सन्नोद्य—Having driven. आज्ञाय—Having learnt or perceived. पतत्रिन्—An arrow ( so called from its hilt being feathered ). विव्यधू रुधि—Disjoin: विव्यधुः रुधि. रुधिराशन—An arrow (lit., living on blood).

## द्वैतवनवासः ।

अनुकीर्ण—Crowded. ईर्यमाण—Being recited. ब्रह्म-घोष—The sound of वेदs ( recited ). गद्यानाम्—Such were the Brāhmaṇas and Upaniṣads not regulated by metre.

P. 38. पार्थानाम्—Includes also the माद्रेयs (नकुल and सहदेव). धीमताम्—Here the Brahmans who are known for intellect. संसृष्टं······क्षत्रम्—The Kṣatriyas united with the Brahmans. भूयः—Here 'the more'

and not 'again'. सन्ध्याम्—Sc. उपास्य (as the commentator takes it), or we may take it as अत्यन्तसंयोगे द्वितीया 'while it was evening' भृगवः, अङ्गिरसः, वसिष्ठाः—See note on अङ्गिरसाम्, p. 27. उदीर्णे—Incited to action. अग्निमारुतौ—मारुत is not comprised under देवताद्वन्द्व, though मरुत् is, and hence no आनङ् by the rule 'देवताद्वन्द्वे च' (Pā. VI. 3. 26). परिगृह्य—Excluding. A peculiar use. अङ्कुशग्रह—Here 'a driver' or 'one who goads'. विप्रहीण—The same as विहीन 'without'. ब्रह्मण्या—Peculiar to a ब्रह्मन् (meaning a ब्राह्मण). अनुपमा—That is, exclusively found in the ब्राह्मणs. दृष्टि—Insight. अप्रतिमम्—Similar to अनुपमा above, i. e., exclusively found in the क्षत्रियs. मेधावी—Intelligent. Sc. क्षत्रियः. बुद्धि......चरेत्—Should seek inspiration, lit., acquisition of wisdom (बुद्धिपर्येषण).

## कर्मप्रशंसा ।

अमित्रकर्शन—A killer of enemies, i. e. a hero. The word अमित्र is masculine, though its antithesis मित्र is neuter. समुत्थान—Exertion. धाता—The creator. विधाता—Providence. दिष्ट—Destiny. हठ—Chance. न कारणात—Not through any agency, i.e. of itself (or by its own intrinsic nature).

P. 40. अनीह—Inactive. अनेनाः—Innocent. कर्षक—The other (more popular) form is कृषक. अप्रवृत्ति—Inaction. अतोऽन्यथा—Other than that, i.e. quite another thing which must never be resorted to.

## गन्धमादनप्रवेशः ।

ततधन्वानः—See note on विततधन्वानम्, p. 27. मार्गण—An arrow. गोधा—A leathern fence worn by an archer on the left arm. अङ्गुलित्राण—A gauntlet.

P. 41. उच्चावच—High and low. किन्नराचरितम्—Occupied by किन्नरs—a class of demigods with the face of a horse. चण्डवातम्—(Adj. to वर्षम्) Attended by a storm. महीज—A tree.

P. 42. अनन्तरान्—Adjacent. परिमार्गन्तः—Groping. निलिल्यिरे—Concealed or sheltered themselves. आदाय सङ्गम्य—The order should be सङ्गम्य आदाय (meeting and then taking). चञ्चलाभासः—Flickering. The second member is आभास् as distinct from the usual form भास्. अश्मसहिताः—Attended by hail-stones. शीघ्रवात—A gust. उडुप—A float. उपरत—Subsided.

P. 43. अनुचिता—Unaccustomed. दुःखपरीता—Overcome by affliction. तपस्विनी—Pitiable. लेभे चेतः—Recovered consciousness.

## सावित्री ।

वेश्म (-श्मन्)—A house. शुभा—Handsome.

P. 44. संनोदिता—Directed. सामीप्येन—(An adj. here)] Neighbouring. छिद्र—A weak point. बत—Alas.

P. 45. ब्रह्मण्य—Respectful towards Brahmans. साङ्कृति—Son of सङ्कृत. अन्यतमोऽश्विभ्याम्—Another (a

third) of the अश्विन्s or अश्विनीकुमारs—the divine physicians—who were twin brothers exquisitely handsome. मैत्र—Friendly. आर्जव—Uprightness. स्थिति—Glory. आक्रम्य—Overcoming. अतिवर्तितुम्—To undo. सत्कृतः—Honoured. देह····ष्यति—Will cast off the body, i.e. die.

P. 46. सकृत्—Once (for all). अंश—Allotment. साधयिष्यामि—(Commonly used in dramas) I shall depart.

### प्रश्नचतुष्टयम् ।

वार्ता—News. बान्धवाः—Namely, the four brothers dead.

P. 47. अस्मिन्...वार्ता—The meaning is: This is the grand news that Time, the master-cook, boils (or gives new forms, through death, to) beings with the following for his auxiliaries, viz. मोह or nescience as a cauldron (कटाह), the sun as fire, day and night as fuel, and months and seasons revolving as ladles to stir with.

गुहायाम्—That is, in the dark not to be explored by human intellect. महाजनः—A concourse of people, i.e. society or ancestry. It does not mean 'a great man' here. पञ्चमे, षष्ठे—Sc. भागे or यामार्धे (the day, as also the night, being conventionally divided into eight parts). वारिचर—An address to the यक्ष (identified here as an aquatic bird).

## भीष्मसन्तर्पणम् ।

व्युष्टायां शर्वर्याम्—(An absolute construction) The nihgt (idiomatically, the day) having dawned.

P. 48. लाजैः—The word लाज 'fried paddy' is masculine and always used in the plural. सन्नाह—An armour. विप्रमुच्य—Having taken off. देवव्रत—Another (the first given) name of भीष्म. यथापूर्वम्—As before, viz., previous to the war. यथावयः—According to (i.e. in order of seniority in) age. भारती—(Adj. to समितिः) Consisting of भारतs or descendants of भरत (here the पाण्डवs and धार्तराष्ट्रs). प्रह्व—Lowly. प्रयच्छ—The root here is दाण् (different from दा of the same meaning) and not यम् which also would give this same form. गाण्डीव—Arjuna's bow so called.

P. 49. दिव्यकर्मपराक्रम—Whose deeds and valour were superhuman. The कर्म here particularly refers to his sacrifice and self-denial.

## सुभद्राश्वासनम् ।

सुदुर्मनाः (-नस्)-Very much distressed. वार्ष्णेयी—A princess of the वृष्णि or यादव family. स्नुषा—A daughter-in-law. निष्ठा—The end or goal. कुले जातस्य—Nobly born. सदृशम्--Worthy. दिष्ट्या—Happily.

P. 50. सैन्धव--That is, जयद्रथ (the king of the Sindhus). बालघातकः—The बाल here refers particularly

to अभिमन्यु. अवलेप—Arrogance. व्युष्टायाम्—See note on the expression under p. 47. वरारोहा (f.)—Handsome (lit., having excellent hips). अमरावती—The capital of Indra. समन्तपञ्चक—A place near कुरुक्षेत्र. शस्त्रजीविन्—A warrior (lit. one living by arms). व्यूढोरस्क—Broad-chested. The समासान्त 'क' is obligatory here. रथप्रणुत्—See note on the word under p. 36. अनुयातः—Followed or imitated. नन्दिनी—A pleasing one (usually a daughter). प्रियं सुमहत्—Viz., the death of जयद्रथ.

## गृध्रजम्बुकसंवादः ।

बालग्रह—A disease of infancy. अलं स्थित्वा—Do not stay. अलम् as a prohibitive particle is used either with त्वाच् or तृतीया. रौद्र—Fearful. कालधर्म—Death. अधिष्ठान—Home. अभ्यगच्छन्त—The आत्मनेपद is आर्ष (archaic). सवर्ण—Of the same colour with. गच्छमानान्—Archaic like अभ्यगच्छन्त above. निर्घृण—Pitiless.

P. 52. अर्थाभियुक्तस्य—Sued in a court of law. अन्यः—That is, a hostile force. अधितिष्ठति—Rules or predominates. For the idea in śloka 10, cf. 'उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥' परिदेवतः—Lamenting. अल्पमेधसा-Dull-witted. The second member is मेधा changed into मेधस् in the compound. निवर्तध्व—The परस्मैपद is आर्ष or archaic. आत्मानं···चथ—For you too will meet the same end one day. यथाकृता—As merited by past deeds.

P. 53. अथ···तन्—The meaning is : When I, too, an animal, could be so moved by affection, how great must be the affection felt by a human being. अनिर्वेद—Absence of निर्वेद (despair). ततो....ऽन्यथ According as he comes to life or not. साग्रम्—With an addition. संश्रणोति—The परस्मैपद is against वार्तिक, the verb being used intransitively here. गृहान्—The word गृह, when masculine, is always plural, and means either 'a house' or 'a wife.'

P. 54. दिष्टान्त—Death (lit. the end of one's appointed time). अश्रु...क्लिन्नः—Because they wept over him. प्रेतपत्तनम्—A town of the departed.

P. 55. निर्बन्ध—Persistency. अप्रत्ययम्—Incredible (as it is). नेङ्गते—Does not move. निष्ठावसान—The end of one's term of life, i.e. death. Equivalent to दिष्टान्त, p. 54. एकमनन्तरम्—One exclusively. कौशिक—An owl. शिवाः—Jackals. The word is feminine, though meaning both male and female. मृगेन्द्र—A lion ( मृग meaning a beast here ). प्रतिनर्दन्ति—Roar in response.

P. 56. देवताः—Evil spirits (here). मृज्यताम्—Be ignored (lit. wiped out). यावदादित्यः—Scil. अस्तं याति. क्रव्याद—A carnivore (क्रव्य = raw flesh). स्वका···क्षौ—Determined (lit. girding up the armpits) each to gain his own object (viz., feasting on the corpse). प्रतिष्ठन्ति—The परस्मैपद here may be explained either

as archaic, or not governable by the rule demanding आत्मनेपद, for the reason that प्र here makes no change in the meaning of the root which it ordinarily does where the rule applies.

### यौवराज्यप्रस्तावः ।

उद्धर्षणम्—Exhilarating. इक्ष्वाकुभिः—A peculiar use (similar to अङ्गिरसाम्, p. 27) by which the derivative ऐक्ष्वाक reduces itself to its original (इक्ष्वाकु) before plural terminations. आचरितम्—Qualifies पन्थानम्. पूर्वैः—By my ancestors. अनिद्रेण—Wakeful or active. पाण्डु···मया—That is, I grew old in the exercise of royalty (a white umbrella being an emblem of royalty). राज....जुष्टम्—Borne (only) by regal powers (like bravery etc). धर्मधुरम्—The yoke of justice or government. The base here is धर्मधुर् instead of धर्मधुरा demanded by the rules. अनुमान्य—A causal form of अनु—मन् 'to permit.' अनुजातः—The proper reading seems to be अनुयातः as used in सुभद्राश्वासनम् (p. 50, śl. 13). The present reading, if correct at all, should be explained as meaning, not, what it would naturally mean, 'born later or younger (as a brother)', but 'born like or worthy of.' पुरुषपुङ्गवम्—An उपमितसमास. पुङ्गव means 'a bull' and is compounded of पुमस् and गो. The corresponding feminine form would be पुंगवी.

